# अध्यात्मरामायणम्

'रामप्रिय' हिन्दीव्याख्योपेतम्

सम्पादकः

आचार्य पंडित शिवदत्तमिश्र शास्त्री



प्रकाशक

श्रीठाकुरप्रसाद पुस्तक भण्डार

कचौड़ीगली· वाराणसी·

'शिव' ग्रन्थमाला : ग्रन्थांक-१०१

महर्षि-कृष्णद्वैपायन-प्रणीतम्

# अध्यात्मरामायणम्

## 'रामप्रिया' हिन्दीव्याख्योपेतम्

व्याख्याकारः सम्पादकश्च

व्याकरणाचार्य-साहित्यवारिधि-तन्त्ररत्नाकरः

**आचार्य पण्डित शिवदत्त मिश्र शास्त्री**

( उत्तर प्रदेश सरकार द्वारा सम्मानित )



प्रकाशकः

**ठाकुर प्रसाद पुस्तक भण्डार**

कचौड़ीगली, वाराणसी-१

प्रथम-संस्करणम् ] सन् १९८४ ई० [ मूल्यम् ७५-००

प्रकाशकः

**ठाकुर प्रसाद पुस्तक भण्डार**

कचौड़ीगली, वाराणसी–१

फोन : ६६४२०

सम्पादक एवं अनुवादक

**आचार्य पण्डित शिवदत्तमिश्र शास्त्री**



प्रथम संस्करण : १९८४

मूल्य : ७५ रुपये

मुद्रक :

**राजप्रेस**

गायघाट ( पाटन दरवाजा )

वाराणसी

*'Shiva' Granthmala Granthank : 101*

THE

# ADHYATM RAMAYANAM

*By*

**Maharshi Krishnadvaipayan**

*Edited with*

**'Rampriya' Hindi-commentry**

*By*

**Acharya Pt. Shri Shivadutta Mishra Shastri**
Vyakarnacharya, Sahityavaridhi, Tantraratnakar

*Published by*

**Thakur Prasad Pustak Bhandar**

**Kachaurigali, Varanasi–221001 (India)**

First Edition 1984 Price 75–00

# प्राक्कथन

भारतीय वाङ्मय में प्रस्तुत अध्यात्मरामायण का सर्वोच्च स्थान एवं इसकी लोकप्रियता भी सर्वविदित है।

ब्रह्माण्डपुराण के उत्तरखण्डान्तर्गत महामुनि वेदव्यासजी ने शिव-पार्वती संवाद रूप इस 'अध्यात्मरामायण' नामक महनीय महान् ग्रन्थ की रचना की है।

इसमें विश्वकल्याणार्थ परम रसायन श्रीरामचरित-वर्णन के साथ कर्म, ज्ञान, भक्ति, उपासना आदि विविध धर्म, सदाचार, राजनीति एवं अध्यात्मतत्त्व सम्बन्धी महत्त्वपूर्ण तथा अनुकरणीय उपदेशप्रद विषय दिये गये हैं। अध्यात्म प्रधान विषय होने से प्रस्तुत पुस्तक का 'अध्यात्मरामायण' यह नाम भी सार्थक प्रतीत होता है।

उपदेशात्मक अंशों के अतिरिक्त प्रस्तुत रामायण की कथावस्तु भी अनेक दृष्टियों से अद्वितीय एवं सर्वाधिक महत्त्वपूर्ण है। मर्यादापुरुषोत्तम होते हुए भी भगवान् राम अपने में स्वयं मूर्तिमान् आत्मतत्त्व हैं। भगवान् श्रीराम की महिमा अपरम्पार एवं वर्णनातीत है।

अयोनिजा जगज्जननी भगवती सीता भी महती प्रकृतिस्वरूपा महामाया हैं। तथा लक्ष्मण जीवकोटि के स्वरूप में वर्णित हैं।

वर्तमान समय में जिस रामचरित मानस में असंख्य नर-नारी अवगाहन कर अपने को परम कृतकृत्य समझते हैं। उस रामचरित-मानस के मूल कथानक का आधार यही ग्रन्थ है।

गोस्वामी तुलसीदासजीकृत श्रीरामचरितमानस के समस्त मूल भाग इस अध्यात्मरामायण से जितने मिलते-जुलते हैं, उतने अन्य किसी ग्रन्थ से नहीं। सारांश यह है कि, तुलसीकृत रामायण पर अध्यात्मरामायण का महत्त्वपूर्ण प्रभाव देखने में आता है।

अध्यात्मरामायण बहुत पहले छपा था, जो कुछ काल पूर्व बाजार में बिलकुल अनुपलब्ध हो गया था। प्रस्तुत ग्रन्थ के प्रति पाठक वर्ग की विशेष अभिरुचि को ध्यान में रख कर 'ठाकुर प्रसाद पुस्तक भण्डार, कचौड़ीगली, वाराणसी' के अध्यक्ष **श्री द्वारिका प्रसाद जी अग्रवाल** के विशेष आग्रह पर ही मैं इस पुस्तक के सम्पादन कार्य में प्रवृत्त हुआ।

इसमें मूल पाठ की शुद्धता प्राचीन प्रतियों के आधार पर की गयी है। मूलानुगामी सरल, सुबोध एवं भावगम्य परिमार्जित हिन्दी टीका लिखी गयी है। इसमें विषयानुक्रमणिका तथा श्लोकानुक्रमणिका भी दे दी गयी है, जिससे ग्रन्थ की उपादेयता और सुन्दरता विशेष बढ़ गयी है।

अब तक अध्यात्मरामायण का ऐसा सर्वांगपरिपूर्ण सर्वोत्तम संस्करण कहीं से प्रकाशित है, यह देखने में नहीं आया।

ठाकुर प्रसाद पुस्तक भण्डार के अध्यक्ष **श्री द्वारिका प्रसाद जी अग्रवाल** ने, जिस उत्साह एवं तत्परता से इस पुस्तक का प्रकाशन किया। उसके लिए वे विशेष धन्यवाद के पात्र हैं।

इसके सम्पादनकार्य में सम्माननीय बन्धुवर **पण्डित श्री हीरामणिजी मिश्र,** व्याकरणाचार्य से मुझे विशेष सहयोग मिला है, एतदर्थ उनका मैं आभारी हूँ। साथ ही अपने **चि० श्री ओमप्रकाश मिश्र** को हार्दिक शुभाशीर्वाद—जिनसे आद्यन्त प्रस्तुत प्रकाशन में विशेष सहायता मिली है।

जगद्गुरु शङ्कराचार्य **स्वामी श्री शङ्करानन्दजी सरस्वती महाराज** का भी मैं विशेष ऋणी हूँ, जिन्होंने अपने व्यस्तकार्य-क्षणों में भी प्रस्तुत पुस्तक में अपने शुभाशीर्वचन प्रदान कर पुस्तकको गौरवान्वित किया है। और सदैव उनकी अक्षुण्ण कृपा-दृष्टि मेरे ऊपर बनी रहती है। तथा **आचार्य पं०करुणापति जी त्रिपाठी एवं आचार्य पं० सीताराम जी चतुर्वेदी** का भी मैं विशेष आभार मानता हूँ कि जिन लोगों ने प्रस्तुत पुस्तक में अपनी सम्मति प्रदान कर पुस्तक की विशेषता व्यक्त की है।

इसका संशोधन-सम्पादन एवं अनुवाद का कार्य भी मैंने बड़ी सावधानी के साथ किया है, फिर भी, मानव-दोष से सम्भव त्रुटियों के लिए क्षमा-प्रार्थी हूँ। और कृपालु पाठकों से नम्र निवेदन है कि जहाँ-कहीं किसी प्रकार की भी त्रुटि रह गयी हो, तो उसे सूचित करें, जिसे मैं अग्रिम संस्करण में उसका सुधार करा सकूँ। साथ ही प्रस्तुत पुस्तक के सम्पादन में हमें जिन ग्रन्थों से सहायता मिली है, तदर्थ उन विद्वान् ग्रन्थ-सम्पादकों एवं प्रकाशकों का भी आभारी हूँ।

**दीपावली**
**२४ अक्टूबर, १९८४**

**—शिवदत्त मिश्र शास्त्री**
सी० के० ५/२६ ए०,
भिखारीदास लेन, वाराणसी-१

# शुभाशीर्वाद

## स्वामी श्री शङ्करानन्द सरस्वती जी महाराज

( काशीस्थ-ऊर्ध्वाम्नाय सुमेरु-पीठाधीश्वर, १००८ अनन्त-
श्रीविभूषित पूज्यपाद जगद्गुरु शङ्कराचार्य )

संस्कृत वाङ्मय के विभिन्न शाखाओं के सुप्रसिद्ध विद्वान् पण्डितप्रवर श्री **शिवदत्त मिश्र जी** द्वारा विरचित नूतनतम अध्यात्मरामायण पर हिन्दी 'रामप्रिया' टीका देखने का हमें सुअवसर मिला। **श्री मिश्र जी** ने मूल पाठ के तात्पर्य को ध्यान में रखते हुए सरल सुबोध शब्दों में श्लोकों की व्याख्या की है।

अध्यात्मरामायण में महर्षि वेदव्यास जी ने प्रवृत्ति और निवृत्ति लक्षण धर्म के स्वरूप का सरलता एवं सुन्दरता के साथ विवेचनात्मक ढंग से उपस्थापन किया है।

**'प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्'**

भगवान् मनु के इस वाक्य का मानो अनुसरण किया गया है। वास्तव में निवृत्ति लक्षण धर्म के उद्देश्य से शून्य प्रवृत्ति लक्षण धर्म जीव के जन्म-मरण चक्र का प्रवर्त्तक ही बना रहता है। अतः निवृत्ति लक्षण धर्म की परमोपादेयता है।

केवल निवृत्ति लक्षण धर्म से भी व्यावहारिक जगत् की मर्यादाएँ अक्षुण्ण नहीं रह सकतीं। अतः वेदोक्त प्रवृत्ति लक्षण तथा निवृत्ति लक्षण उभय धर्मों के अवलम्बन में मानव जीवन का कल्याण सुव्यवस्थित एवं सुस्थित है। यही उद्देश्य अनादि अपौरुषेय वेदों, स्मृतियों, पुराणों, महाभारत और रामायण का रहा है।

अध्यात्मरामायण में भगवान् राम, लक्ष्मण तथा श्री हनुमान् जी आदि के वचन शारीरिक व्यापार आदि के द्वारा वेदव्यास जी ने मानवता को भयानक विपत्ति के समय में भी दृढता एवं धैर्य का सुदृढ़तम सेतु उपस्थापित किया है। जिसके आधार पर चलता हुआ प्राणी व्यावहारिक जगत् में सफलता एवं सुफलता का वरण करता हुआ अविद्या विजृम्भित भेद प्रपञ्च का निरसन करता हुआ सच्चिदानन्द स्वरूप परब्रह्म भगवान् राम की अभिन्नता को प्राप्त कर सकता है। यही रामायण शब्द में अध्यात्म विशेषण का तात्पर्य है।

प्रस्तुत पुस्तक की 'रामप्रिया' हिन्दी व्याख्या उक्त भाव का प्रचार-प्रसार हो और सनातन धर्म में लोगों की निष्ठा सुस्थिर हो, इस उद्देश्य से शताधिक ग्रन्थों के लेखक-सम्पादक एवं व्याख्याकार **श्री मिश्र जी** ने 'रामप्रिया' हिन्दी टीका के द्वारा हिन्दी-जगत् का महान् उपकार किया है। इसके लिए हम उन्हें हार्दिक शुभाशीर्वाद देते हैं और भगवान् विश्वनाथ से कामना करते हैं कि अध्यात्म-रामायण के सिद्धान्तों पर चलने के लिए हम भारतीयों में शक्ति एवं स्फूर्ति प्रदान करें।

**ऊर्ध्वाम्नाय श्रीकाशी सुमेरु पीठ**
बी. १/१२८ ए-२
अस्सी, वाराणसी-२२१००५

शङ्करानन्द सरस्वती

# शुभाशंसा

## आचार्य पण्डित श्री करुणापति त्रिपाठी

( अध्यक्ष : उत्तर प्रदेश संस्कृत अकादमी, लखनऊ, पूर्व कुलपति : सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी )

**आचार्य पण्डित श्री शिवदत्त मिश्र** जी द्वारा अनूदित अध्यात्म-रामायण को मैं आद्योपान्त पढ़ा। इस रामायण में रामभक्ति का जो स्वरूप वर्णित है वह निश्चय ही रामभक्ति-शाखा के संस्कृत काव्यों में महनीय है। इस ग्रन्थ के आरम्भ में अध्यात्मरामायण का माहात्म्य दिया हुआ है जिसके अन्त में पुष्पिका है —

'श्रीब्रह्माण्डपुराणे उत्तरखण्डेऽध्यात्मरामायणमाहात्म्यं सम्पूर्णम्।' तथा इसी प्रकार प्रथम अध्याय के अन्त में लिखा है—'इति श्रीमदध्यात्मरामायणे उमा-महेश्वर-संवादे बालकाण्डे श्रीरामहृदयं नाम प्रथमः सर्गः।'

इस आधार पर कहा जा सकता है कि यह ग्रन्थ ब्रह्माण्डपुराण का अंश है। इसमें उमा-महेश्वर-संवाद के रूप में समस्त रामकथा वर्णित है।

यह ध्यान देने की बात है कि इसमें 'बालकाण्डम्', 'अयोध्याकाण्डम्' आदि काण्डों के नाम से वाल्मीकिरामायण की पद्धति पर कथा का संयोजन किया गया है। प्रत्येक काण्ड में अनेक सर्ग भी हैं। इसकी कथा-वर्णनशैली पौराणिक रूप से उमा-महेश्वर के संवादों के अन्तर्गत आदि से अन्त तक वर्णित है। स्थान-स्थान पर 'उमा उवाच', 'श्रीमहादेव उवाच' लिखा है। परन्तु इसके अतिरिक्त 'राम उवाच', 'कबन्ध उवाच' इत्यादि के द्वारा भी पौराणिक शैली का विनियोग किया गया है। कथा की मूल धारा वाल्मीकि के आधार पर है। परन्तु भक्ति-भावना से यह ग्रन्थ आद्यन्त ओत-प्रोत है।

कुछ लोगों का अनुमान है कि भक्ति-भावना योग वाशिष्ठ से गृहीत की गयी है। और राम-भक्ति भी इस ग्रन्थ में उसी पद्धति की अनुगामिनी है।

चाहे जो भी हो, इतना अवश्य कहा जा सकता है कि भक्ति-भावना के लिए गोस्वामी तुलसीदास जी ने इस ग्रन्थ का अध्ययन अवश्य किया होगा।

**डा० प्रभात शास्त्री** कवि-कुटीर, दारागंज, प्रयाग ने संस्कृत टीका वाले अपने अध्यात्मरामायण ग्रन्थ के सम्पादन में कतिपय पुष्ट प्रमाणों से इसे किसी दाक्षिणात्य कवि के द्वारा लिखित होने की सूचना दी है। यह सब अनुसन्धान कर्ताओं का विषय है।

इस ग्रन्थ के सम्बन्ध में यहाँ इतना ही कहना चाहता हूँ कि **आचार्य श्री शिवदत्त मिश्र जी** ने बड़ी ही सुस्पष्ट एवं अर्थबोधक शैली में सरल हिन्दी के माध्यम से अनुवाद करते हुए इस ग्रन्थ के सम्पादन द्वारा ऐसे रामभक्तों के लिए—जो संस्कृत नहीं जानते हैं—बड़ा उपकार किया है। बड़े श्रम, लगन, भक्तिभाव और निष्ठा के साथ इस सानुवाद ग्रन्थ को प्रस्तुत किया है।

मेरी शुभाशंसा है कि पूजन, पूजा-विधान एवं पूजन-रहस्य-परक अनेक ग्रन्थों के लेखक-सम्पादक एवं अनुवादक **पण्डित श्री शिवदत्त मिश्र जी** का यह ग्रन्थ रामभक्तों में समादृत एवं सुप्रचारित होगा।

**शरत्पूर्णिमा, संवत् २०४१**
**वाराणसी**

कमलापति त्रिपाठी

# शुभ-सम्मति

## आचार्य पण्डित सीताराम चतुर्वेदी साहित्याचार्य

( एम. ए. [ संस्कृत, पालि, हिन्दी, प्रत्न भारतीय इतिहास और संस्कृति ]
बी. टी. ( अँगरेजी-शिक्षण में विशेषता ), एल्-एल्. बी., साहित्याचार्य )

महर्षि वाल्मीकिने अपने आदि महाकाव्य रामायण में जिस रामकथा का सविस्तर वर्णन किया है उस रामकथा को सभी पुराणों ने थोड़ी-बहुत मात्रा में यथास्थान वर्णित किया है। तदनुसार ब्रह्माण्डपुराण में सात काण्डों में जो राम की कथा दी गयी है उसे अध्यात्मरामायण संज्ञा दी गयी है और उस नाम की व्युत्पत्ति करते हुए कहा गया है--

'आत्मानमधिकृत्य कृतं रामस्य अयनं रामायणम् ।'

इस अध्यात्मरामायण के आदि में पुराणों की वर्णन-प्रणाली के अनुसार नारद ने जब ब्रह्माजी के पास जाकर पूछा कि कलिकाल के पापरत समाज का निस्तार कैसे होगा ? तब ब्रह्माजी ने उनसे कहा कि एक बार महादेवजी ने पार्वतीजी को जो अध्यात्मरामायण सुनाया था उसे सुनकर ही कलिकाल के लोग मुक्त हो जायेंगे।

इसके आदि काण्ड में आया है--

**बहुना किमिहोक्तेन शृणु नारद ! तत्त्वतः ।**
**श्रुति-स्मृति-पुराणेतिहासा-ऽऽगमशतानि च ।**
**अर्हन्ति नाल्पमध्यात्म-रामायणकलामपि ।।'**

देखो नारद ! बहुत क्या कहा जाय ? श्रुति-स्मृति-पुराण-इतिहास और सैकड़ों आगम मिलकर भी अध्यात्मरामायण की थोड़ी-सी कला के बराबर नहीं पहुँच पा सकते।

गोस्वामी तुलसीदास जी ने भी अपने रामचरितमानस में राम-कथा के इस रहस्य का उल्लेख करते हुए यही कहा है--

**'रचि महेस निज मानस राखा।**
**पाइ सुसमय सिवासन भाखा ।।'**

रामचरितमानस के अन्त में भी उन्होंने स्पष्ट लिखा है —

'यत्पूर्वं प्रभुणा कृतं सुकविना श्रीशम्भुना दुर्गमं
श्रीमद्रामचरित्रमानसमिदं प्राप्त्यै तु रामायणम्।
मत्वा तद्रघुनाथनामनिरतं स्वान्तस्तमः शान्तये
भाषाबद्धमिदं चकार तुलसीदासस्तथा मानसम् ॥'

इस अध्यात्मरामायण का गोस्वामी तुलसीदास जी पर कितना प्रभाव पड़ा है इसी से इसका महत्त्व सिद्ध हो जाता है।

इस महनीय महाग्रन्थ का विद्वत्समाज में प्रारम्भ से ही बड़ा आदर होता तो रहा है किन्तु कोई अच्छी टीका न मिलने के कारण सामान्य पाठक की गति उसमें नहीं हो पा रही थी। यह अत्यन्त हर्ष का विषय है कि 'राम-प्रिया' नामक हिन्दी व्याख्या के साथ विद्वान् टीकाकार **आचार्य पण्डित शिवदत्त मिश्र जी** ने अत्यन्त सरल, सर्वबोध्य भाषा में इस ग्रन्थ का अनुवाद करके इस ग्रन्थको सर्व-सुलभ बना देने का अत्यन्त सराहनीय कार्य किया है।

मैं **श्री मिश्र जी** को इस महत्त्वपूर्ण आयोजन के लिए हृदय से साधुवाद और बधाई देता हूँ तथा विश्वास करता हूँ कि भारतीय जन-समाज इस ग्रन्थ का समुचित समादर करेगा।

उत्तर बेनिया बाग,
वाराणसी-२२१००१
श्रावण कृ० ११, सं० २०४१ वि.

**—सीताराम चतुर्वेदी**

## ग्रन्थकारसंस्तवः

देवरिया-जनपदके ख्याते ग्रामे मझौलिकाऽभिख्ये ।
उद्भटशूरा मल्ला यत्राऽऽसन् विश्वविख्याता ॥ १ ॥

विद्या–सदाचारगुण–प्रसिद्धा लोकद्वयी साधनकर्मसिद्धाः ।
यत्राऽभवँल्लोक–ललामभूता, विप्रा जगद्वन्दित-पादपद्माः ॥ २ ॥

पितामहोऽभूम्मम लोकवित्तः, श्रीकान्तनामा-ऽऽगममर्म-विज्ञः ।
तदात्मजौ द्वौ परमार्थनिष्ठौ, जातौ प्रतीक्ष्याऽर्चनरक्तचितौ ॥ ३ ॥

श्रीसन्तशरणनामा ज्यायानासीन्नितान्त-विख्यातः ।
शास्त्राऽनुशीलनपरः शुभकर्मपरायणः सततम् ॥ ४ ॥

श्रीसत्यनारायणनामधेय आसीत्कनीयाञ्शुभभागधेयः ।
द्वावप्यभूतां पितृभक्तिभाजौ, लोकोपकारे परमप्रवीणौ ॥ ५ ॥

श्रीसन्तशरणविदुषो द्वौ पुत्रौ भक्तिसम्पन्नौ ।
श्रीलजगन्नाथ इति ज्यायानासीद् गुणाऽग्रणीर्धीमान् ॥ ६ ॥

तदनुजनुर्गुरुभक्तः शिवदत्तोऽहं समाख्यया प्रथितः ।
पित्रोः परिचरणपरः शास्त्राऽम्बुधिमज्जने रसिकः ॥ ७ ॥

वागीश्वरी नाम ममाऽऽद्यपत्नी, सावित्रिकाया प्रसवित्रिकाऽऽसीत् ।
सा द्रौपदी नाम मदन्यपत्नी, पुष्पाप्रसूर्द्वे अपि मुक्तिभाजौ ॥ ८ ॥

पौरस्त्य-पाश्चात्त्य-विशिष्टविद्या कलाप्रवीणस्य विचक्षणस्य ।
सत्यव्रतस्याऽस्ति कलत्ररत्नं सावित्रिका नाम मदीयकन्या ॥ ९ ॥

कनीयसी मे दुहिताऽस्ति पुष्पा, श्रीमद्-रमेशाख्यबुधस्य पत्नी ।
उभे मदीये तनये, स्वधर्मं, सम्पाद्य सौभाग्य-समन्विते स्तः ॥ १० ॥

आचार्योऽहं शब्दशास्त्रे तथैव, साहित्याऽब्धिग्रन्थनिर्माणशीलः ।
तन्त्रे, स्तोत्रे, व्याकृतौ धर्मशास्त्रे, सन्ति ग्रन्था निर्मिता मामकीनाः ॥ ११ ॥

अद्याऽवधि ग्रन्थशताऽधिकं मे प्रकाशितं भूरिपरिश्रमेण ।
अशान्तयत्नेन कृतिं करोमि शास्त्रोक्तकृत्यं विदधामि नित्यम् ॥ १२ ॥

स्वचित्त-शिष्टा-ऽऽस्तिक-तोषणाय निरन्तरं शास्त्रचयं समीक्ष्य ।
मया प्रणीता विविधाः प्रबन्धाः संप्रार्थये तत्र सतां सुदृष्टिम् ॥ १३ ॥

□

# विषयानुक्रमणिका

**इति विषयानुक्रमणिका समाप्ता ।**

□

## श्रीसीतारामयोर्ध्यानं वन्दनं च

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्ये पुष्पकमासने मणिमये वीरासने सुस्थितम् ।
अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं
व्याख्यातं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥१॥

वामे भूमिसुता पुरश्च हनुमान् पश्चात् सुमित्रासुतः
शत्रुघ्नो भरतश्च पार्श्वदलयोर्वाय्वादिकोणेषु च ।
सुग्रीवश्च विभीषणश्च युवराट् तारासुतो जाम्बवान्
मध्ये नीलसरोजकोमलरुचिं रामं भजे श्यामलम् ॥२॥

ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं
पीतं वासो वसानं नवकमलदल-स्पर्द्धिनेत्रं प्रसन्नम् ।
वामाङ्कारूढसीता-मुखकमल-मिलल्-लोचनं नीरदाभं
नानालङ्कारदीप्तं दधतमुरुजटामण्डलं रामचन्द्रम् ॥३॥

कल्याणानां निधानं कलिमलमथनं पावनं पावनानां
पाथेयं यन्मुमुक्षोः सपदि पर-पदप्राप्तये प्रस्थितस्य ।
विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां
बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥४॥

रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणार्णवं गुणनिधिं विप्रप्रियं धार्मिकम् ।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे लोकाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥५॥

नमोऽस्तु रामाय स-लक्ष्मणाय
देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्र-यमा-ऽनिलेभ्यः
नमोऽस्तु चन्द्रार्क-मरुद्गणेभ्यः ॥६॥

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाऽभिहता निशाचरचमू रामाय तस्मै नमः ।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम ! मामुद्धर ॥७॥

श्रीमङ्गलमूर्तये नमः

# अध्यात्मरामायणम्

## 'रामप्रिया'-हिन्दीव्याख्या-सहितम्

## *माहात्म्यम्*

**अप्रमेय-त्रयातीत-निर्मलज्ञान-मूर्तये ।**
**मनोगिरां विदूराय दक्षिणामूर्तये नमः ॥१॥**

सूत उवाच

**कदाचिन्नारदो योगी परानुग्रहवाञ्छया ।**
**पर्यटन् सकलाँल्लोकान् सत्यलोकमुपागमत् ॥२॥**

---

यन्नाम्ना प्रददाति निर्वृतिमसौ काश्यां प्रभुः शङ्करः
संसारार्णवतारणं महितं यन्नाम रामाऽभिधम् ।
तस्य श्रीरघुपुङ्गवस्य चरितं चाऽध्यात्मरामायण
तद्व्याख्या नृगिरा पिपर्तु सुजनान् 'रामप्रिया' सन्ततम् ॥१॥
तातो यस्य सुधीन्द्र-सन्तशरणो माता जयन्ती सती
आचार्यः शुकदेवशर्मविबुधो नाम्ना चतुर्वेदकः ।
गङ्गास्नानपरः सदागममतिर्वेदान्तचर्चारतो
नाम्ना 'श्रीशिवदत्तमिश्र' इति स व्याख्याति रामायणम् ॥२॥

जो प्रत्यक्षादि प्रमाणों से परे होने के कारण अप्रमेय हैं, तीनों गुणों से रहित एवं निर्मल ज्ञानस्वरूप हैं। मन, वाणी आदि इन्द्रियों से सर्वथा अगोचर हैं, उन दक्षिणा मूर्ति भगवान् सदाशिव को मैं नमस्कार करता हूँ ॥१॥

सूत जी ने कहा—किसी समय योगिराज नारद जी लोकोपकार की इच्छा से समस्त लोकों में भ्रमण करते हुए सत्यलोक में चले गये ॥२॥

तत्र दृष्ट्वा मूर्तिमद्भिश्छन्दोभिः परिवेष्टितम् ।
बालार्कप्रभया सम्यग् भासयन्तं सभागृहम् ॥३॥
मार्कण्डेयादि-मुनिभिः स्तूयमानं मुहुर्मुहुः ।
सर्वार्थगोचरज्ञानं सरस्वत्या समन्वितम् ॥४॥
चतुर्मुखं जगन्नाथं भक्ताऽभीष्टफलप्रदम् ।
प्रणम्य दण्डवद्-भक्त्या तुष्टाव मुनिपुङ्गवः ॥५॥
सन्तुष्टस्तं मुनिं प्राह स्वयम्भूर्वैष्णवोत्तमम ।
किं प्रष्टुकामस्त्वमसि तद् वदिष्यामि ते मुने ! ॥६॥
इत्याकर्ण्य वचस्तस्य मुनिर्ब्रह्माणमब्रवीत् ।
त्वत्तः श्रुतं मया सर्वं पूर्वमेव शुभाऽशुभम् ॥७॥
इदानीमेकमेवास्ति श्रोतव्यं सुरसत्तम ।
तद्रहस्यमपि ब्रूहि यदि तेऽनुग्रहो मयि ॥८॥

---

वहाँ पर उन्होंने साक्षात् शरीर धारण किये हुए, वेदों से घिरे ब्रह्मदेव को देखा। वे बालसूर्य के समान अपनी प्रभा से सभागृह को आलोकित कर रहे थे ॥ ३ ॥ मार्कण्डेय आदि मुनिगण बारम्बार उनकी स्तुति कर रहे थे, उनको अतीन्द्रिय पदार्थों का भी ज्ञान था तथा वे सरस्वती से सुशोभित हो रहे थे ॥ ४ ॥ इस प्रकार भक्तों को अभीष्ट फल देने वाले जगत्पति ब्रह्मा को देख नारदजी उन्हें साष्टांग प्रणाम कर भक्तिभाव से उनकी स्तुति करने लगे ॥ ५ ॥

स्तुति से सन्तुष्ट हुए स्वयम् भगवान् ब्रह्मा ने वैष्णवाग्रणी नारदजी से कहा—'हे मुने ! तुम क्या पूछना चाहते हो पूछो ? मैं तुम्हें सब कुछ बताऊँगा' ॥ ६ ॥ ब्रह्मा के द्वारा इस प्रकार कहे जाने पर नारदजी ने उनसे कहा—हे देव ! मैं आप से शुभ एवं अशुभ कर्मों का वर्णन पूर्व में सुन चुका हूँ ॥ ७ ॥ हे सुरसत्तम ! अब मुझे आप से एक ही बात जानने की इच्छा है। यदि आप मेरे ऊपर अनुग्रह करना चाहते हैं, तो गोपनीय होने पर भी आप मुझे बताइये ॥ ८ ॥

प्राप्ते कलियुगे घोरे नराः पुण्यविवर्जिताः ।
दुराचाररताः सर्वे सत्यवार्तापराङ्मुखाः ॥९॥
परापवादनिरताः परद्रव्याभिलाषिणः ।
परस्त्रीसक्तमनसः परहिंसापरायणाः ॥१०॥
देहात्मदृष्टयो मूढा नास्तिकाः पशुबुद्धयः ।
मातृ-पितृकृत-द्वेषाः स्त्रीदेवाः काम-किङ्कराः ॥११॥
विप्रा लोभग्रहग्रस्ता वेदविक्रयजीविनः ।
धनार्जनार्थमभ्यस्तविद्या मदविमोहिताः ॥१२॥
त्यक्तस्वजातिकर्माणः प्रायशः परवञ्चकाः ।
क्षत्रियाश्च तथा वैश्याः स्वधर्मत्यागशीलिनः ॥१३॥
तद्वच्छूद्राश्च ये केचिद् ब्राह्मणाचारतत्पराः ।
स्त्रियश्च प्रायशो भ्रष्टा भर्त्रवज्ञाननिर्भयाः ॥१४॥

---

आगे घोर कलिकाल के आ जाने पर मनुष्य पुण्य कर्म का त्याग कर दुष्कर्म में निरत हो जायेंगे। एवं सत्य भाषण से विमुख हो जायेंगे ।। ९ ।। वे दूसरों की निन्दा करेंगे, दूसरे का धन चाहेंगे। पर-स्त्री में आसक्ति रखेंगे तथा दूसरों की हिंसा में परायण रहेंगे ।। १० ।। वे मूर्ख, शरीर को ही आत्मा मानने वाले होंगे। ईश्वर, देवता, गुरु एवं शास्त्र-वचनों में श्रद्धा नहीं करेंगे। पशुओं के समान आचरण करेंगे। तथा अपने पोषक एवं समुत्पादक माता-पिता से द्वेष कर स्त्री-भक्त हो काम की गुलामी करेंगे ।। ११ ।। ब्राह्मण लोभ-ग्रह से ग्रस्त हो वेद को बेंच कर अपनी जीविका चलायेंगे। और धनोपार्जन करने वाली विद्या का अभ्यास करेंगे तथा सदैव उन्मत्त दिखाई देंगे ।। १२ ।।

इसी प्रकार क्षत्रिय एवं वैश्य भी स्व-स्व जाति विहित कर्मों का त्याग कर पर-वञ्चक हो जायेंगे। और अपने-अपने धर्म का त्याग कर देंगे ॥१३॥ इसी तरह शूद्र भी अपने धर्म-कर्म का त्याग कर ब्राह्मणोचित सदाचार में निरत हो जायेंगे। स्त्रियाँ दुश्चरित्र होकर अपने पति का अपमान निडर होकर करेंगी ।। १४ ।। निःसन्देह वे स्त्रियाँ अपने सास तथा श्वसुर से द्रोह

श्वशुरद्रोहकारिण्यो भविष्यन्ति न संशयः ।
एतेषां नष्टबुद्धीनां परलोकः कथं भवेत् ॥१५॥
इति चिन्ताकुलं चित्तं जायते मम सन्ततम् ।
लघूपायेन येनैषां परलोकगतिर्भवेत् ।
तमुपायमुपाख्याहि सर्वं वेत्ति यतो भवान् ॥१६॥
इत्यृषेर्वाक्यमाकर्ण्य प्रत्युवाचाम्बुजासनः ।
साधु पृष्टं त्वया साधो वक्ष्ये तच्छृणु सादरम् ॥१७॥
पुरा त्रिपुरहन्तारं पार्वती भक्तवत्सला ।
श्रीरामतत्त्वं जिज्ञासुः पप्रच्छ विनयान्विता ॥१८॥
प्रियायै गिरिशस्तस्यै गूढं व्याख्यातवान् स्वयम् ।
पुराणोत्तममध्यात्मरामायणमिति स्मृतम् ॥१९॥
तत्पार्वती जगद्धात्री पूजयित्वा दिवानिशम् ।
आलोचयन्ती स्वानन्दमग्ना तिष्ठति साम्प्रतम् ॥२०॥

---

करेंगी। नारद ने कहा—इन नष्ट बुद्धिवाले चतुर्वर्णों का सुधार किस प्रकार होगा ? और किस प्रकार वे उत्तम लोक प्राप्त करेंगे ? ॥ १५ ॥

हे ब्रह्मदेव ! मेरा चित्त इन्हीं चिन्ताओं से निरन्तर सन्तप्त रहता है। अतः जिन सुगम उपायों से इन लोगों के परलोक का सुधार हो वह उपाय आप हमें बताइए, क्योंकि आप सर्वज्ञ हैं ॥ १६ ॥

देवर्षि नारद के वचन को सुनकर कमलासन पर विराजमान ब्रह्मा ने कहा—हे साधो ! तुमने अच्छी बात पूछी है। मैं उसे बतलाता हूँ, श्रद्धा पूर्वक सुनो ॥ १७ ॥ भक्तों के ऊपर कृपा करने वाली जगदम्बा पार्वती ने श्रीरामतत्त्व जानने की इच्छा से त्रिपुर-विनाशक भगवान् शङ्कर से बड़े विनय से पूर्व-काल में यही प्रश्न किया था ॥ १८ ॥ उस समय भगवान् गिरीश ने जिस निगूढ़ तत्व का उपदेश अपनी प्रिया से किया था वह तत्त्वोपदेश पुराणों में सर्वोत्तम अध्यात्म-रामायण नाम से प्रसिद्ध हुआ ॥ १९ ॥ इस समय जगत् का पालन करने वाली भगवती पार्वती उस पुराण का पूजन करती हुई ध्यान में निमग्न हो उसका मनन कर सदैव आत्मानन्द में लीन रहती हैं ॥ २० ॥ जब प्राणियों के पुण्य का उदय होगा तो उसी कथा का लोक में

अचरिष्यति तल्लोके प्राण्यदृष्टवशाद् यदा ।
तस्याऽध्ययनमात्रेण जना यास्यन्ति सद्गतिम् ॥२१॥
तावद् विजृम्भते पापं ब्रह्महत्यापुरःसरम् ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥२२॥
तावत् कलिमहोत्साहो निःशङ्कं सम्प्रवर्तते ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥२३॥
तावद्यमभटाः शूराः सञ्चरिष्यन्ति निर्भयाः ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥२४॥
तावत् सर्वाणि शास्त्राणि विवदन्ते परस्परम् ॥२५॥
तावत् स्वरूपं रामस्य दुर्बोधं महतामपि ।
यावज्जगति नाध्यात्मरामायणमुदेष्यति ॥२६॥
अध्यात्मरामायण - सङ्कीर्तन - श्रवणादिजम् ।
फलं वक्तुं न शक्नोमि कार्त्स्न्येन मुनिसत्तम ! ॥२७॥
तथाऽपि तस्य माहात्म्यं वक्ष्ये किञ्चित्तवानघ ।
शृणु चित्तं समाधाय शिवेनोक्तं पुरा मम ॥२८॥

---

प्रचार होगा। उसी अध्यात्मरामायण के अध्ययन मात्र से लोग सद्गति को प्राप्त करेंगे ॥ २१ ॥ संसार में ब्रह्महत्यादि पापों का उदय तभी तक रहेगा, जब तक अध्यात्मरामायण का प्रादुर्भाव नहीं होता ॥ २२ ॥ कलिकाल का महान् उत्साह तभी तक निःशङ्क बढ़ता रहेगा, जब तक अध्यात्मरामायण का उदय नहीं होता ॥ २३ ॥ यमराज के शूर-वीर दूत निर्भय होकर तभी तक विचरते रहेंगे जब तक अध्यात्मरामायण का उदय नहीं होता ॥ २४ ॥ सभी शास्त्रों का आपस में विवाद तभी तक रहेगा, जब तक अध्यात्मरामायण का उदय नहीं होता ॥ २५ ॥ महा-पुरुषों को भी भगवान् श्रीराम के स्वरूप का बोध तब तक नहीं होगा, जब तक अध्यात्मरामायण का प्रकाश नहीं होता ॥ २६ ॥

ब्रह्माजी ने कहा—हे मुनिश्रेष्ठ नादर जी ! अध्यात्मरामायण के कीर्तन तथा श्रवणादि के सम्पूर्ण फल का वर्णन करने में मैं भी सर्वथा असमर्थ हूँ ॥ २७ ॥ तथापि मैं तुम्हें उसका थोड़ा-सा माहात्म्य सुना रहा हूँ, जिसे शिवजी ने मुझे पूर्वकाल में सुनाया था, सावधानी से तुम उसे सुनो ॥ २८ ॥

अध्यात्मरामायणतः श्लोकं श्लोकार्धमेव वा ।
यः पठेद् भक्तिसंयुक्तः स पापान्मुच्यते क्षणात ॥२९॥
यस्तु प्रत्यहमध्यात्म-रामायणमनन्यधीः ।
यथाशक्ति वदेद् भक्त्या स जीवन्मुक्त उच्यते ॥३०॥
यो भक्त्याऽर्चयतेऽध्यात्म - रामायणमतन्द्रितः ।
दिने दिनेऽश्वमेधस्य फलं तस्य भवेन्मुने ॥३१॥
यदृच्छयाऽपि योऽध्यात्मरामायणमनादरात ।
अन्यतः शृणुयान् मर्त्यः सोऽपि मुच्येत पातकात ॥३२॥
नमस्करोति योऽध्यात्मरामायणमदूरतः ।
सर्वदेवार्चनफलं स प्राप्नोति न संशयः ॥३३॥
लिखित्वा पुस्तकेऽध्यात्मरामायणमशेषतः ।
यो दद्याद्रामभक्तेभ्यस्तस्य पुण्यफलं शृणु ॥३४॥
अधीतेषु च वेदेषु शास्त्रेषु व्याकृतेषु च ।
यत्फलं दुर्लभं लोके तत्फलं तस्य सम्भवेत ॥३५॥

---

इस अध्यात्मरामायण से जो पुरुष एक श्लोक अथवा आधा श्लोक भी भक्ति पूर्वक पाठ करता है वह सद्यः पाप से मुक्त हो जाता है ॥२९॥ जो पुरुष इस अध्यात्मरामायण को नित्य प्रति अनन्य बुद्धि से भक्तिपूर्वक यथा शक्ति दूसरों से कहता है वह जीवन्मुक्त हो जाता है ॥ ३० ॥ हे मुने ! जो पुरुष इस अध्यात्मरामायण की भक्तिभाव से सावधानी पूर्वक प्रतिदिन अर्चना करता है वह अश्वमेधयज्ञ का फल प्राप्त करता है ॥ ३१ ॥ जो मनुष्य मनमाने ढंग से अनादर पूर्वक भी दूसरों से अध्यात्मरामायण का श्रवण करता है, पापों से उसका भी छुटकारा हो जाता है ॥३२॥

जो कोई अध्यात्मरामायण के सन्निकट जाकर उसे प्रणाम करता है, वह सम्पूर्ण देवताओं की पूजा का फल प्राप्त करता है, इसमें सन्देह नहीं ॥३३॥ जो पुरुष सम्पूर्ण अध्यात्मरामायण को लिखकर पुस्तक के रूप में रामभक्तों को उसका दान करता है उसके पुण्यफल को सुनो ॥३४॥ वेदों के स्वाध्याय एव शास्त्रों की व्याख्या करने से भी जो फल प्राप्त नहीं होता वह उसे प्राप्त होता है ॥३५॥ एकादशी के दिन उपवास कर जो राम-

एकादशीदिनेऽध्यात्म - रामायणमुपोषितः ।
यो रामभक्तः सदसि व्याकरोति नरोत्तमः ॥३६॥
तस्य पुण्यफलं वक्ष्ये शृणु वैष्णवसत्तम ।
प्रत्यक्षरं तु गायत्रीपुरश्चर्याफलं भवेत् ॥३७॥
उपवासव्रतं कृत्वा श्रीरामनवमीदिने ।
रात्रौ जागरितोऽध्यात्म-रामायणमनन्यधीः ।
यः पठेच्छृणुयाद् वाऽपि तस्य पुण्यं वदाम्यहम् ॥३८॥
कुरुक्षेत्रादि - निखिल - पुण्यतीर्थेष्वनेकशः ।
आत्मतुल्यं धनं सूर्यग्रहणे सर्वतोमुखे ॥३९॥
विप्रेभ्यो व्यासतुल्येभ्यो दत्त्वा यत्फलमश्नुते ।
तत्फलं सम्भवेत्तस्य सत्यं सत्यं न संशयः ॥४०॥
यो गायते मुदाऽध्यात्मरामायणमहर्निशम् ।
आज्ञां तस्य प्रतीक्षन्ते देवा इन्द्रपुरोगमाः ॥४१॥
पठन् प्रत्यमहमध्यात्मरामायणमनुव्रतः ।
यद्यत् करोति तत्कर्म ततः कोटिगुणं भवेत् ॥४२॥

---

भक्त सभा के मध्य में इस अध्यात्मरामायण की व्याख्या करता है ॥३६॥
ब्रह्मा जी ने कहा—हे वैष्णवश्रेष्ठ नारदजी ! उसके पुण्य का फल सुनो । उस व्याख्या के एक-एक अक्षर से उसे गायत्री पुरश्चरण का फल प्राप्त होता है ॥३७॥ श्री रामनवमी के दिन उपवास परायण होकर, रात्रि में जागरण कर, जो पुरुष इस अध्यात्मरामायण का पाठ करता है अथवा सुनता है उसका पुण्यफल कहता हूँ ॥३८॥ सर्वग्रास सूर्यग्रहण के समय, कुरुक्षेत्र आदि समस्त तीर्थों में अपने बराबर धन का दान, व्यास जैसे अनेक ब्राह्मणों को अनेकों बार देने से जितना फल प्राप्त होता है, उतना फल अध्यात्म-रामायण के पाठ से उसे प्राप्त होता है, यह बात सत्य है, यह बात सत्य है, इसमें सन्देह नहीं ॥३९–४०॥

जो पुरुष दिन-रात अध्यात्मरामायण का गान किया करता है, उसके आज्ञा की प्रतीक्षा स्वर्ग में इन्द्रादि देवगण भी किया करते हैं ॥४१॥ प्रति-दिन नियम पूर्वक प्रसन्नचित्त हो अध्यात्मरायायण का पाठ करते हुए मनुष्य जो कुछ भी पुण्य करता र हता है वह करोड़ों गुना फल देता है ॥ ४२ ॥

तत्र श्रीरामहृदयं यः पठेत सुसमाहितः ।
स ब्रह्मघ्नोऽपि पूतात्मा त्रिभिरेव दिनैर्भवेत ॥४३॥
श्रीरामहृदयं यस्तु हनूमत्प्रतिमान्तिके ।
त्रिः पठेत् प्रत्यहं मौनी स सर्वेप्सितभाग् भवेत ॥४४॥
पठन् श्रीरामहृदयं तुलस्यश्वत्थयोर्यदि ।
प्रत्यक्षरं प्रकुर्वीत ब्रह्महत्यानिवर्तनम् ॥४५॥
श्रीरामगीतामाहात्म्यं कृत्स्नं जानाति शङ्करः ।
तदर्धं गिरिजा वेत्ति तदर्धं वेद्म्यहं मुने ॥४६॥
तत्ते किञ्चित् प्रवक्ष्यामि कृत्स्नं वक्तुं न शक्यते ।
यज्ज्ञात्वा तत्क्षणाल्लोकश्चित्तशुद्धिमवाप्नुयात ॥४७॥
श्रीरामगीता यत्पापं न नाशयति नारद ॥
तन्न नश्यति तीर्थादौ लोके क्वापि कदाचन ।
तन्न पश्याम्यहं लोके मार्गमाणोऽपि सर्वदा ॥४८॥

---

जो पुरुष अत्यन्त सावधानी से इस अध्यात्मरामायण के अन्तर्गत वर्तमान श्रीरामहृदय का पाठ करता है, वह ब्रह्महत्या-जैसे पाप से भी तीन ही दिन में छुटकारा पा जाता है ॥४३॥ जो पुरुष इस श्रीरामहृदय का पाठ श्रीहनुमान् जी की मूर्त्ति के समीप प्रतिदिन तीन बार मौन होकर करता है उसको समस्त अभीष्ट की प्राप्ति हो जाती है ॥४४॥ यदि कोई पुरुष तुलसी अथवा अश्वत्थ (पीपल) वृक्ष के नीचे श्रीरामहृदय का पाठ करे, तो वह एक-एक अक्षर से ब्रह्महत्या जैसे पापों को नष्ट कर देता है ॥४५॥

ब्रह्मा जी ने कहा—हे नारद ! श्रीरामगीता का माहात्म्य पूर्णरूप से भगवान् शङ्कर ही जानते हैं। उसका आधा माहात्म्य श्री पार्वतीजी जानती हैं तथा उसका आधा मैं जानता हूँ ॥४६॥ उस रामगीता का सम्पूर्ण माहात्म्य कहने में असमर्थ होने के कारण उसका कुछ अंश हे नारद ! मैं तुम्हें सुना रहा हूँ। उस माहात्म्य के सुन लेने मात्र से संसारी जीवों के चित्त की शुद्धि तत्क्षण हो जाती है ॥४७॥

हे देवर्षि नारद ! जिस पाप को श्रीराम-गीता ने नष्ट नहीं किया वह पाप संसार के किसी भी तीर्थादि में नष्ट नहीं हो सकता। मैं ऐसे पापों को सदैव ढूंढता रहता हूँ, जो पाप रामगीता के पाठ से नष्ट न होता हो ॥४८॥

रामेणोपनिषत्सिन्धुमुन्मथ्योत्पादितां मुदा ।
लक्ष्मणायार्पितां गीता सुधां पीत्वाऽमरो भवेत् ॥४९॥
जमदग्निसुतः पूर्वं कार्तवीर्यवधेच्छया ।
धनुर्विद्यामभ्यसितुं महेशस्यान्तिके वसन् ॥५०॥
अधीयमानां पार्वत्या रामगीतां प्रयत्नतः ।
श्रुत्वा गृहीत्वाऽऽशु पठन्नारायणकलामगात् ॥५१॥
ब्रह्महत्यादि-पापानां निष्कृतिं यदि वाञ्छति ।
रामगीतां मासमात्रं पठित्वा मुच्यते नरः ॥५२॥
दुष्प्रतिग्रह-दुर्भोज्य-दुरालापादिसम्भवम् ।
पापं यत्तत् कीर्तनेन रामगीता विनाशयेत् ॥५३॥
शालग्रामशिलाग्रे च तुलस्यश्वत्थसन्निधौ ।
यतीनां पुरतस्तद्वद्रामगीतां पठेत्तु यः ॥५४॥
स तत्फलमवाप्नोति यद्वाचोऽपि न गोचरम् ॥५५॥

---

जिस रामगीता रूप अमृत को भगवान् श्रीराम ने उपनिषत्सागर का मन्थन कर उत्पन्न किया और प्रसन्नता से लक्ष्मण को पिलाया। उस रामगीता रूप अमृत का पान मनुष्य को नित्य करना चाहिए, जिसे वह अमर हो जाय ॥४९॥

पूर्वकाल में श्रीपरशुराम जी कार्त्तवीर्य का वध करने के लिए जब धनुर्विद्या पढ़ने हेतु श्री महादेवजी के सन्निकट निवास कर रहे थे ॥५०॥ उस समय उन्होंने श्रीरामगीता का अध्ययन करती हुई श्रीपार्वतीजी के मुख सुनकर यत्नपूर्वक उनसे ग्रहण किया। और उसका पाठ करते-करते नारायण के कलास्वरूप हो गये ॥५१॥ यदि कोई मनुष्य ब्रह्महत्या जैसे घोर पापों से छुटकारा पाना चाहता हो, तो उसे एक मास मात्र श्रीरामगीता का पाठ करना चाहिए ॥५२॥ शास्त्र निषिद्ध दान, अभक्ष्यभक्षण एवं अश्लील आदि वार्त्ता से जितने पाप होते हैं, वे सभी प्रकार के पाप रामगीता के पाठ मात्र से नष्ट हो जाते हैं ॥५३॥

शालिग्राम शिला के समक्ष, तुलसी एवं पीपल वृक्ष के निकट एवं यतिजनों के आगे रामगीता के पाठ से जो फल प्राप्त होता है, उसे वाणी द्वारा कहा नहीं जा सकता ।।५४-५५॥

रामगीतां पठन् भक्त्या यः श्राद्धे भोजयेद् द्विजान् ।
तस्य ते पितरः सर्वे यान्ति विष्णोः परं पदम् ॥५६॥
एकादश्यां निराहारो नियतो द्वादशीदिने ।
स्थित्वाऽगस्त्यतरोर्मूले रामगीतां पठेत्तु यः ।
स एव राघवः साक्षात सर्वदेवैश्च पूज्यते ॥५७॥
विना दानं विना ध्यानं विना तीर्थावगाहनम् ।
रामगीतां नरोऽधीत्य तदनन्तफलं लभेत ॥५८॥
बहुना किमिहोक्तेन शृणु नारद तत्त्वतः ।
श्रुति-स्मृति-पुराणेतिहासागम-शतानि च ।
अर्हन्ति नाल्पमध्यात्मरामायणकलामपि ॥५९॥
अध्यात्मरामचरितस्य मुनीश्वराय
माहात्म्यमेतदुदितं कमलासनेन ।
यः श्रद्धया पठति वा शृणुयात स मर्त्यः
प्राप्नोति विष्णुपदवीं सुरपूज्यमानः ॥६०॥

इति श्रीब्रह्माण्डपुराणे उत्तरखण्डेऽध्यात्मरामायणमाहात्म्यं सम्पूर्णम् ।

---

जो मनुष्य श्राद्ध में रामगीता का भक्तिपूर्वक पाठ कर ब्राह्मणों को भोजन कराता है, उसके पितर विष्णु लोक को प्राप्त करते हैं ॥५६॥ जो पुरुष एकादशी को निराहार एवं जितेन्द्रिय हो द्वादशी के दिन अगस्त्य वृक्ष के मूल के सन्निधान में बैठकर रामगीता का पाठ करता है, वह साक्षात् राम स्वरूप ही है और समस्त देवगण उसकी पूजा करते हैं ॥५७॥ नित्य प्रति रामगीता का पाठ करने वाला मनुष्य दान, ध्यान एवं तीर्थस्नान के बिना ही अक्षय फल प्राप्त करता है ॥५८॥

हे नारद ! रामगीता के माहात्म्य के विषय में बहुत अधिक क्या कहें, यथार्थ यही है कि श्रुति, स्मृति, इतिहास, पुराण आदि सैकड़ों ग्रन्थ अध्यात्म-रामायण के एक तुच्छ कला की बराबरी नहीं कर सकते ॥५९॥ अध्यात्मरामायण के इस माहात्म्य को स्वयं श्रीब्रह्मा जी ने अपने श्रीमुख से देवर्षि नारद को बताया है। जो मनुष्य श्रद्धापूर्वक इस अध्यात्म-रामायण को पढ़ता या सुनता है वह देवताओं से पूजित होकर श्रीविष्णु भगवान् के लोक को प्राप्त करता है ॥ ६० ॥

इस प्रकार आचार्य पण्डित श्रीशिवदत्त मिश्र शास्त्रीकृत 'रामप्रिया' हिन्दी व्याख्या में ब्रह्माण्डपुराण के उत्तरखण्ड में अध्यात्मरामायण का माहात्म्य समाप्त ।

०

# अध्यात्मरामायणम्

## 'रामप्रिया'-हिन्दीव्याख्या-सहितम्

## बालकाण्डम्

*

### १. प्रथमः सर्गः

( रामहृदयम् )

यः पृथिवीभरवारणाय दिविजैः संप्रार्थितश्चिन्मयः
संजातः पृथिवीतले रविकुले मायामनुष्योऽव्ययः ।
निश्चक्रं हतराक्षसः पुनरगाद् ब्रह्मत्वमाद्यं स्थिरां
कीर्तिं पापहरां विधाय जगतां तं जानकीशं भजे ॥ १ ॥
विश्वोद्भव-स्थिति-लयादिषु हेतुमेकं मायाश्रयं विगतमायमचिन्त्यमूर्तिम्
आनन्दसान्द्रममलं निजबोधरूपं सीतापतिं विदिततत्त्वमहं नमामि॥२॥
पठन्ति ये नित्यमनन्यचेतसः शृण्वन्ति चाऽध्यात्मिकसंज्ञितं शुभम् ।
रामायणं सर्वपुराणसम्मतं निर्धूतपापा हरिमेव यान्ति ते ॥३॥
अध्यात्मरामायणमेव नित्यं पठेद्यदीच्छेद् भवबन्धमुक्तिम् ।
गवां सहस्रायुतकोटिदानात् फलं लभेद्यः शृणुयात् स नित्यम् ॥४॥

---

रामहृदय—देवताओं की प्रार्थना से पृथ्वी का भार उतारने के लिए जिन अविनाशी चिन्मय प्रभु ने अवतार लेकर राक्षस-समूहों का वध किया। तथा जो संसार में अपनी पाप-विनाशिनी अविचल कीर्ति स्थापित कर अपने ब्रह्मस्वरूप में लीन हो गये, उन जानकीनाथ का मैं भजन करता हूँ ॥१॥ जो विश्व की उत्पत्ति, पालन तथा संहार के एक मात्र कारण हैं, माया के आश्रय होकर भी स्वयं माया से रहित हैं, उन अचिन्त्य स्वरूप, आनन्दघन, निर्मल तथा ज्ञानस्वरूप तत्त्ववेत्ता श्री रामचन्द्र जी को नमस्कार करता हूँ ॥२॥ जो लोग सर्व पुराण सम्मत, कल्याणकारी इस अध्यात्मरामायण का एकाग्रचित्त से पाठ करते हैं अथवा सुनते हैं उनका पाप नष्ट हो जाता है और वे श्री भगवान् हरि को प्राप्त करते हैं ॥३॥

संसार से मुक्ति की इच्छा करनेवाले पुरुष को अध्यात्मरामायण का पाठ नित्य नियमपूर्वक करना चाहिए, तथा जो मनुष्य लाखों, करोड़ों गोदान का फल प्राप्त करना चाहता है, उसे नित्य अध्यात्मरामायण का श्रवण

पुरारिगिरिसम्भूता श्रीरामार्णवसङ्गता ।
अध्यात्मरामगङ्गेयं पुनाति भुवनत्रयम् ॥ ५ ॥
कैलासाग्रे कदाचिद् रविशतविमले मन्दिरे रत्नपीठे
संविष्टं ध्याननिष्ठं त्रिनयनमभयं सेवितं सिद्धसङ्घैः ।
देवी वामाङ्कसंस्था गिरिवरतनया पार्वती भक्तिनम्रा
प्राहेदं देवमीशं सकलमलहरं वाक्यमानन्दकन्दम् ॥ ६ ॥

पार्वत्युवाच

नमोऽस्तु ते देव जगन्निवास सर्वात्मदृक् त्वं परमेश्वरोऽसि ।
पृच्छामि तत्त्वं पुरुषोत्तमस्य सनातनं त्वं च सनातनोऽसि ॥ ७ ॥
गोप्यं यदत्यन्तमनन्यवाच्यं वदन्ति भक्तेषु महानुभावाः ।
तदप्यहोऽहं तव देव भक्ता प्रियोऽसि मे त्वं वद यत्तु पृष्टम् ॥ ८ ॥
ज्ञानं सविज्ञानमथानुभक्ति-वैराग्ययुक्तं च मितं विभास्वत ।
जानाम्यहं योषिदपि त्वदुक्तं यथा तथा ब्रूहि तरन्ति येन ॥ ९ ॥

करना चाहिए ॥४॥ यह अध्यात्मरामायण रूपी गङ्गा श्री शङ्कर रूप पर्वत से निकलकर रामरूपी समुद्र में मिलती है, जो त्रिलोकी को सदैव पवित्र कर रही है। किसी समय कैलाश शिखर के ऊपरी भाग पर विराजमान, सैकड़ों सूर्य के समान देदीप्यमान भवन में रत्न सिंहासन पर देवाधिदेव भगवान् शंकर ध्यान-मुद्रा में बैठे हुए थे, सिद्ध-समूह उनकी सेवा कर रहे थे ॥५॥ उन सर्व पापहारी, नित्य निर्भय भगवान् भोलानाथ के वामाङ्ग में विराजमान भगवती पार्वती ने विनम्र होकर भक्ति-भाव से इस प्रकार पूछा ॥६॥

पार्वती ने कहा—हे जगन्निवास ! हे देव ! आप प्राणी मात्र के अन्तःकरण के साक्षी एवं परमेश्वर हैं, मैं आप को प्रणाम करती हूँ। मैं आप से पुरुषोत्तम के सनातन तत्त्व को पूछना चाहती हूँ। क्योंकि आप भी स्वयं सनातन हैं ॥७॥ महानुभाव लोग उस परम गोपनीय विषय को भी, जो दूसरे से कहने योग्य नहीं होता, अपने भक्तों से प्रगटरूप में कह देते हैं। हे नाथ ! मैं आप की भक्त एवं अर्द्धाङ्गिनी होने से आप की ही हूँ, अतः मैं जो कुछ पूछ रही हूँ उसको आप बताइए ॥८॥ हे नाथ ! मनुष्य जिस ज्ञान से संसाररूपी समुद्र से पार हो जाते हैं, वैराग्य एवं भक्ति से युक्त ब्रह्मतत्त्व का साक्षात्कार कराने वाले प्रकाश स्वरूप उस आत्मज्ञान का वर्णन थोड़े ही शब्दों में इस प्रकार कीजिए जिससे मैं स्त्री होकर भी आप के वचनों

पृच्छामि चाऽन्यच्च परं रहस्यं तदेव चाग्रे वद वारिजाक्ष ।
श्रीरामचन्द्रेऽखिल-लोकसारे भक्तिर्दृढा नौर्भवति प्रसिद्धा ॥१०॥
भक्तिः प्रसिद्धा भवमोक्षणाय नाऽन्यत्ततः साधनमस्ति किञ्चित् ।
तथाऽपि हृत्संशयबन्धनं मे विभेत्तुमर्हस्यमलोक्तिभिस्त्वम् ॥११॥
वदन्ति रामं परमेकमाद्यं निरस्त-मायागुण-सम्प्रवाहम् ।
भजन्ति चाहर्निशमप्रमत्ताः परं पदं यान्ति तथैव सिद्धाः ॥१२॥
वदन्ति केचित् परमोऽपि रामः स्वाविद्यया संवृतमात्मसंज्ञम् ।
जानाति नात्मानमतः परेण सम्बोधितो वेद परात्मतत्त्वम् ॥१३॥
यदि स्म जानाति कुतो विलापः सीताकृतेऽनेन कृतःपरेण ।
जानाति नैवं यदि केन सेव्यः समो हि सर्वैरपि जीवजातैः ॥१४॥
अत्रोत्तरं किं विदितं भवद्भिस्तद् ब्रूत मे संशयभेदि वाक्यम् ॥१५॥

को स्वाभाविक रूप से समझ सकूँ ।।९।। हे कमलनयन ! इसके अतिरिक्त मैं एक और गुप्त रहस्य आप से पूछ रही हूँ, सर्व-प्रथम उसे ही आप मुझे बतावें । यह तो सभी लोग जानते हैं कि संसार रूप समुद्र का सन्तरण करने के लिये समस्त तत्त्वों के सारभूत भगवान् श्री रामचन्द्र जी की भक्ति ही एकमात्र दृढ नौका है ।।१०।।

संसार-सागर से मुक्त होने के लिये भक्ति ही सर्वोत्तम साधन है । उससे श्रेष्ठ और कोई भी साधन नहीं है, तथापि आप अपने पवित्र वचनों से मेरे हृदय की संशय रूपी ग्रन्थि को नष्ट कीजिए ।।११।। सिद्ध लोग श्रीराम को अद्वितीय, सबके आदिकारण और माया के गुण-प्रवाह से सर्वथा पृथक् बताते हैं, अतः वे प्रमाद रहित हो उनका अहर्निश भजन करते हुए परम पद को प्राप्त करते हैं ।।१२।। परन्तु कोई-कोई राम को परब्रह्म मानते हुए भी अवतार दशा में माया से आवृत हो जाने के कारण उन्हें आत्मज्ञान से रहित बताते हैं । इसीलिये वसिष्ठादि के उपदेश करने पर उनको आत्म-ज्ञान हुआ ऐसा मानते हैं ।।१३।। अतः मुझे भी सन्देह हो रहा है कि यदि वे आत्मज्ञानी थे, तो उन परमात्मा ने सीता के लिये इतना विलाप क्यों किया ? ऐसा करने से तो यही जान पड़ता है कि वे आत्मज्ञान से रहित सामान्य मनुष्यों के समान ही थे, पुनः उनका भजन क्यों किया जाना चाहिए ।।१४।। इस विषय में आप ने क्या उत्तर सोचा है ? मेरे इस संशय को दूर करने के लिए मुझे आप उपदेश करें ।।१५।।

श्रीमहादेव उवाच

धन्याऽसि भक्ताऽसि परात्मनस्त्वं यज्ज्ञातुमिच्छा तव रामतत्त्वम् ।
पुरा न केनाप्यभिचोदितोऽहं वक्तुं रहस्यं परमं निगूढम् ॥१६॥
त्वयाऽद्य भक्त्या परिनोदितोऽहं वक्ष्ये नमस्कृत्य रघूत्तमं ते ।
रामः परात्मा प्रकृतेरनादिरानन्द एकः पुरुषोत्तमो हि ॥१७॥
स्वमायया कृत्स्नमिदं हि सृष्ट्वा नभोवदन्तर्बहिरास्थितो यः ।
सर्वान्तरस्थोऽपि निगूढ आत्मा स्वमायया सृष्टमिदं विचष्टे ॥१८॥
जगन्ति नित्यं परितो भ्रमन्ति यत्सन्निधौ चुम्बकलोहवद्धि ।
एतन्न जानन्ति विमूढचित्ताः स्वाविद्यया संवृतमानसा ये ॥१९॥
स्वाज्ञानमप्यात्मनि शुद्धबुद्धे स्वारोपयन्तीह निरस्तमाये ।
संसारमेवानुसरन्ति ते वै पुत्रादिसक्ताः पुरुकर्मयुक्ताः ॥२०॥

---

तब श्री महादेव जी ने कहा–हे देवि ! तुम धन्य हो, परमात्मा की परम भक्त हो क्योंकि तुम्हारे मन में रामतत्त्व जानने की जिज्ञासा उत्पन्न हुई है। आज तक इस निगूढ तत्त्व को कहने के लिए किसी ने मुझसे ऐसा प्रश्न नहीं किया था ॥१६॥ इसलिए मैं श्रीराम की वन्दना कर तुम्हारे इस निगूढ प्रश्न का उत्तर दे रहा हूँ। श्रीरामचन्द्र जी निःसन्देह प्रकृति से परे परमात्मा हैं, अनादि हैं तथा आनन्दघन अद्वितीय पुरुषोत्तम हैं ॥१७॥ वे परमात्मा श्रीरामचन्द्र जी अपनी माया से समस्त संसार की सृष्टि कर आकाश के समान भीतर और बाहर व्याप्त हैं तथा सबके अन्तःकरण में आत्मस्वरूप से संस्थित होकर इस सृष्टि का संचालन करते हैं ॥१८॥ चुम्बक के सन्निधान से जिस प्रकार जड़ लोहे में गति उत्पन्न होती है उसी प्रकार परमात्मा श्रीराम के सन्निधान मात्र से सृष्टि चक्र घूमता रहता है। मूढ लोगों का मन अविद्या से सदा ढँका रहता है अतः वे लोग उस परमात्मा राम को नहीं जान सकते ॥१९॥ इतना ही नहीं, वे अज्ञानी पुरुष माया से रहित शुद्ध-बुद्ध उस राम रूप परमात्मा में अपना अज्ञान भी आरोपित करते हैं और अपने समान उन्हें भी अज्ञानी मानते हैं, देह, गेह, पुत्रादि में आसक्त इस प्रकार के अज्ञानी प्राणी संसार चक्र में कर्म के बन्धनों में फँस कर उसी में भटकते रहते है ॥२०॥

जानन्ति नैवं हृदये स्थितं वै चामीकरं कण्ठगतं यथाज्ञाः ।
यथाप्रकाशो न तु विद्यते रवौ ज्योतिःस्वभावे परमेश्वरे तथा ।
विशुद्धविज्ञानघने रघूत्तमेऽविद्या कथं स्यात् परतः परात्मनि ॥२१॥

यथा हि चाऽक्ष्णा भ्रमता गृहादिकं विनष्टदृष्टेर्भ्रमतीव दृश्यते ।
तथैव देहेन्द्रियकर्तुरात्मनः कृते परेऽध्यस्य जनो विमुह्यति ॥२२॥

नाहो न रात्रिः सवितुर्यथा भवेत् प्रकाशरूपाव्यभिचारतः क्वचित् ।
ज्ञानं तथाऽज्ञानमिदं द्वयं हरौ रामे कथं स्थास्यति शुद्धचिद्घने ॥२३॥

तस्मात् परानन्दमये रघूत्तमे विज्ञानरूपे हि न विद्यते तमः ।
अज्ञानसाक्षिण्यरविन्दलोचने मायाश्रयत्वान्न हि मोहकारणम् ॥२४॥

अत्र ते कथयिष्यामि रहस्यमपि दुर्लभम् ।
सीता - राम - मरुत्सूनु - संवादं मोक्षसाधनम् ॥२५॥

---

ऐसे अज्ञजन अपने कण्ठ मे पड़े हुए सुवर्णमय हार को न जानने के समान हृदयस्थित रामरूप परमात्मा को भी नहीं जानते, इसीलिए उनमें अपने अज्ञान का आरोप करते हैं। जिस प्रकार सूर्य में तम का सर्वथा अभाव है उसी प्रकार प्रकृति से अतीत विशुद्ध विज्ञानघन, ज्योतिस्वरूप उन परमात्मा परमेश्वर श्रीराम में भी अविद्या टिक नहीं सकती ॥२१॥ जिस प्रकार चक्कर लगाते समय मनुष्यों को नेत्रों के घूमने से भ्रम वश, गृह आदि भी घूमते हुए प्रतीत होते है, उसी प्रकार लोग भी अपने देह एवं इन्द्रियों के कर्त्तापन का अभिमान विशुद्ध आतमा में आरोपित कर मोहित होते रहते हैं ॥२२॥ जिस प्रकार सदैव प्रकाशित होने के कारण सूर्य में रात-दिन का कोई भेद उत्पन्न नहीं होता, उसी प्रकार शुद्ध चेतनघन राम रूप परमातमा में ज्ञान तथा अज्ञान का व्यवहार सर्वथा असम्भव है ॥२३॥

अतएव विज्ञानस्वरूप आनन्दमय शुद्ध चिद्घन रघूत्तम परमातमा में अज्ञान का लेशमात्र भी नहीं रह सकता। वे कमल नयन अज्ञान के साक्षी होते हुए भी उससे सर्वथा निर्लिप्त हैं, माया उनके आश्रित है, वह उन्हें कभी मोहित नहीं कर सकती ॥२४॥ हे पार्वति ! इस विषय में मैं तुम्हें राम, सीता एवं हनुमान् के संवाद को सुनाता हूँ, जो मोक्ष का साधन है तथा अत्यन्त गोपनीय होने से लोगों के लिए सर्वथा दुर्लभ है ॥२५॥

पुरा रामायणे रामो रावणं देवकण्टकम् ।
हत्वा रणे रणश्लाघी सपुत्रबलवाहनम् ॥२६॥
सीतया सह सुग्रीव-लक्ष्मणाभ्यां समन्वितः ।
अयोध्यामगमद्रामो हनूमत्प्रमुखैर्वृतः ॥२७॥
अभिषिक्तः परिवृतो वसिष्ठाद्यैर्महात्मभिः ।
सिंहासने समासीनः कोटिसूर्यसमप्रभः ॥२८॥
दृष्ट्वा तदा हनूमन्तं प्राञ्जलिं पुरतः स्थितम् ।
कृतकार्यं निराकाङ्क्षं ज्ञानापेक्षं महामतिम् ॥२९॥
रामः सीतामुवाचेदं ब्रूहि तत्त्वं हनूमते ।
निष्कल्मषोऽयं ज्ञानस्य पात्रं नो नित्यभक्तिमान् ॥३०॥
तथेति जानकी प्राह तत्त्वं रामस्य निश्चितम् ।
हनूमते प्रपन्नाय सीता लोकविमोहिनी ॥३१॥
रामं विद्धि परं ब्रह्म सच्चिदानन्दमद्वयम् ।
सर्वोपाधिविनिर्मुक्तं सत्तामात्रमगोचरम् ॥३२॥

---

पूर्वकाल में रामावतार के समय युद्धप्रिय श्रीरामचन्द्र जी देवकण्टक रावण को पुत्र, सेना एवं वाहनों के सहित युद्ध में मारकर सुग्रीव एवं लक्ष्मण तथा सीता के साथ हनुमान् आदि प्रमुख वानरों से घिरे हुए अयोध्यापुरी में लौट आये ॥२६-२७॥ राज्याभिषेक होने पर वसिष्ठ आदि महर्षियों से घिरे हुए, करोड़ों सूर्य के समान देदीप्यमान श्रीरामचन्द्र जी सिंहासन पर समासीन हुए ॥२८॥ उस समय सेवा-कार्य से निवृत्त, निःस्पृह परम बुद्धिमान् श्री हनुमान् जी को तत्त्व-जिज्ञासा की दृष्टि से अपने आगे हाथ जोड़े हुए खड़े देखकर श्रीराम ने सीता से कहा—हे सीते ! यह हनुमान् सर्वथा निष्पाप है और हम दोनों में नित्य भक्ति रखता है, ज्ञान का पात्र भी है इसलिए इसे तत्त्व का उपदेश करो ॥२९-३०॥ उस समय 'बहुत अच्छा' कहती हुई लोक-मोहनी श्री जानकी शरणागत हनुमान् को भगवान् श्रीराम का निश्चित तत्त्व बताने लगीं ॥३१॥

श्री सीताजी ने हनुमान् से कहा—हे पुत्र ! तुम श्रीराम को सच्चिदा-

आनन्दं निर्मलं शान्तं निर्विकारं निरञ्जनम् ।
सर्वव्यापिनमात्मानं स्वप्रकाशमकल्मषम् ॥३३॥
मां विद्धि मूलप्रकृतिं सर्गस्थित्यन्तकारिणीम् ।
तस्य सन्निधिमात्रेण सृजामीदमतन्द्रिता ॥३४॥
तत्सान्निध्यान्मया सृष्टं तस्मिन्नारोप्यतेऽबुधैः ।
अयोध्यानगरे जन्म रघुवंशेऽतिनिर्मले ॥३५॥
विश्वामित्रसहायत्वं मखसंरक्षणं ततः ।
अहल्याशापशमनं चापभङ्गो महेशितुः ॥३६॥
मत्पाणिग्रहणं पश्चाद् भार्गवस्य मदक्षयः ।
अयोध्यानगरे वासो मया द्वादशवार्षिकः ॥३७॥
दण्डकारण्यगमनं विराधवध एव च ।
मायामारीचमरणं मायासीताहृतिस्तथा ॥३८॥
जटायुषो मोक्षलाभः कबन्धस्य तथैव च ।
शबर्याः पूजनं पश्चात् सुग्रीवेण समागमः ॥३९॥

---

नन्द, अद्वय, सभी उपाधियों से रहित सत्तामात्र, इन्द्रिय एवं मन से अगोचर, आनन्दघन, निर्मल, शान्त, निर्विकार, माया से रहित, सर्वव्यापक, स्वयं-प्रकाश तथा निष्पाप परमात्मा समझो ॥३२-३३॥ और मुझे जगत् की उत्पत्ति, पालन एवं संहार करने वाली मूलप्रकृति समझो। इनकी सन्निधि मात्र से मैं सदैव बड़ी सावधानी से इस जगत् की सृष्टि किया करती हूँ ॥३४॥ अज्ञ लोग इनकी सन्निधि मात्र से की गयी इस विश्व की सृष्टि को इनमें कर्तृत्वादि का आरोप करते हैं। अयोध्यापुरी में अत्यन्त पावन रघु-कुल में इनका जन्म ग्रहण करना, विश्वामित्र की सहायता तथा उनके यज्ञ का संरक्षण, अहल्या को शापमुक्त करना, श्रीमहादेवजी के धनुष को तोड़ना, पश्चात् मेरा पाणिग्रहण कर परशुराम का गर्व खण्डन करना, मेरे साथ विवाह के बाद बारह वर्ष पर्यन्त अयोध्या में निवास, तदनन्तर दण्डकारण्य में प्रवेश, वहाँ विराध वध करना, मृग रूपधारी मारीच का वध करना, मायामयी सीता का हरण होना, जटायु एवं कबन्ध को मुक्ति प्रदान करना, शबरी द्वारा सत्कार प्राप्त करना, सुग्रीव से मित्रता का होना, बाली का

वालिनश्च वधः पश्चात् सीतान्वेषणमेव च ।
सेतुबन्धश्च जलधौ लङ्कायाश्च निरोधनम् ॥४०॥
रावणस्य वधो युद्धे सपुत्रस्य दुरात्मनः ।
विभीषणे राज्यदानं पुष्पकेण मया सह ॥४१॥
अयोध्यागमनं पश्चाद्राज्ये रामाभिषेचनम् ।
एवमादीनि कर्माणि मयैवाचरितान्यपि ।
आरोपयन्ति रामेऽस्मिन् निर्विकारेऽखिलात्मनि ॥४२॥
रामो न गच्छति न तिष्ठति नानुशोच-
त्याकाङ्क्षते त्यजति नो न करोति किञ्चित् ।
आनन्दमूर्तिरचलः परिणामहीनो
मायागुणाननुगतो हि तथा विभाति ॥४३॥
ततो रामः स्वयं प्राह हनूमन्तमुपस्थितम् ।
शृणु तत्त्वं प्रवक्ष्यामि ह्यात्मानात्मपरात्मनाम् ॥४४॥
आकाशस्य यथा भेदस्त्रिविधो दृश्यते महान् ।

---

वध करना, श्री सीता का अन्वेषण करना, समुद्र पर पुल बाँधकर लङ्कापुरी को घेरना, पुत्र सहित दुरात्मा रावण का वध करना, विभीषण को लङ्का का राज्य देना, पुष्पक विमान द्वारा मेरे साथ अयोध्या में लौटना तथा राज्यपद पर श्रीराम का समासीन होना आदि समस्त कार्य मेरे द्वारा ही किया गया है फिर भी अज्ञान के कारण लोग इन कार्यों को निर्विकार परमात्मा में आरोपित करते हैं ॥३५-४२॥

वस्तुतः श्रीराम तो परब्रह्म ही हैं, वे न चलते हैं, न खड़े रहते हैं, न सोचते हैं, न इच्छा करते हैं, न त्याग करते हैं और न कोई शरीरेन्द्रिय चेष्टा करते हैं। वे सर्वथा आनन्द स्वरूप, अविचल और परिणाम (विकार) रहित हैं, किन्तु माया के गुणों से अनुगत (व्याप्त) होने के कारण वैसे ही प्रतीत होते हैं ॥४३॥

तदनन्तर श्रीरामचन्द्र जी ने सम्मुख खड़े हुए हनुमान् जी से स्वयं कहा—हनुमान् ! मैं तुम्हें आत्मा, अनात्मा तथा परमात्मा का तत्त्व समझाता हूँ, सावधानी से सुनो ॥४४॥ जिस प्रकार जलाशय में आकाश के तीन भेद स्पष्ट रूप से ज्ञात होते हैं, प्रथम महाकाश, जलावच्छिन्न आकाश और

जलाशये महाकाशस्तदवच्छिन्न एव हि।
प्रतिबिम्बाख्यमपरं दृश्यते त्रिविधं नभः ॥४५॥
बुद्ध्यवच्छिन्नचैतन्यमेकं पूर्णमथापरम्।
आभासस्त्वपरं बिम्बभूतमेवं त्रिधा चितिः ॥४६॥
साभासबुद्धेः कर्तृत्वमविच्छिन्नेऽविकारिणि।
साक्षिण्यारोप्यते भ्रान्त्या जीवत्वं च तथा बुधैः ॥४७॥
आभासस्तु मृषा बुद्धिरविद्याकार्यमुच्यते।
अविच्छिन्नं तु तद्ब्रह्म विच्छेदस्तु विकल्पतः ॥४८॥
अविच्छिन्नस्य पूर्णेन एकत्वं प्रतिपाद्यते।
तत्त्वमस्यादिवाक्यैश्च साभासस्याहमस्तथा ॥४९॥
ऐक्यज्ञानं यदोत्पन्नं महावाक्येन चात्मनोः।
तदाविद्या स्वकार्यैश्च नश्यत्येव न संशयः ॥५०॥

---

तीसरा प्रतिबिम्बाकाश, अतः जिस प्रकार आकाश के महान् तीन भेद दिखाई पड़ते हैं ॥४५॥ उसी प्रकार चेतन आत्मा भी तीन प्रकार का है; पहला बुद्ध्यावच्छिन्न चेतन, दूसरा सर्वत्र परिपूर्ण रूप से व्याप्त है एवं तीसरा वह जो बुद्धि में प्रतिबिम्बित होकर भासता है, जो आभास चेतन नाम से प्रसिद्ध है ॥४६॥ चिदाभास सहित बुद्धि में ही कर्त्तृत्व है किन्तु अज्ञजन भ्रान्तिवश निरवच्छिन्न अव्यय और सर्वद्रष्टा परम चेतन में ही कर्त्तृत्व और जीवत्व का आरोप करते हैं और उसे ही कर्त्ता, भोक्ता आदि मानते हैं ॥४७॥ आभास चेतन तो मिथ्या है और बुद्धि अविद्या का कार्य है, परब्रह्म परमात्मा वस्तुतः विच्छेद से रहित है, अतः उसकी परिच्छिन्नता भी वैकल्पिक है ॥४८॥ साभास अहं रूप अविच्छिन्न चेतन की 'तत्त्वमसि' आदि महावाक्यों के द्वारा पूर्णचेतन के साथ एकता बतलायी जाती है ॥४९॥

जब महावाक्य के द्वारा जीवात्मा एवं परमात्मा की एकता का बोध हो जाता है, उस समय अविद्या समूल अपने कार्यों के साथ नष्ट हो जाती है, इसमें कोई सन्देह नहीं ॥५०॥ मेरा भक्त ऐसा समझ कर मुझे प्राप्त

एतद् विज्ञाय मद्भक्तो मद्भावायोपपद्यते ।
मद्भक्तिविमुखानां हि शास्त्रगर्तेषु मुह्यताम् ।
न ज्ञानं न च मोक्षः स्यात्तेषां जन्मशतैरपि ॥५१॥

इदं रहस्यं हृदयं ममात्मनो
मयैव साक्षात् कथितं तवानघ ! ।
मद्भक्तिहीनाय शठाय न त्वया
दातव्यमैन्द्रादपि राज्यतोऽधिकम् ॥५२॥

श्रीमहादेव उवाच

एतत्तेऽभिहितं देवि श्रीरामहृदयं मया ।
अतिगुह्यतमं हृद्यं पवित्रं पापशोधनम् ॥५३॥
साक्षाद्रामेण कथितं सर्ववेदान्तसंग्रहम् ।
यः पठेत् सततं भक्त्या स मुक्तो नाऽत्र संशयः ॥५४॥
ब्रह्महत्यादि-पापानि बहुजन्मार्जितान्यपि ।
नश्यन्त्येव न सन्देहो रामस्य वचनं यथा ॥५५॥

---

पूर्ण अधिकारी हो जाता है किन्तु मेरी भक्ति को छोड़कर जो लोग शास्त्र-रूपी गड्ढे में पड़े-पड़े भटकते रहते हैं, उन्हें सैकड़ों जन्म-पर्यन्त न तो ज्ञान हो पाता है और न वे मोक्ष ही प्राप्त कर सकते हैं ॥५१॥

हे परम निष्पाप हनुमान् जी ! यह परम रहस्य आत्मस्वरूप मुझ राम का हृदय है । इस रहस्य का उपदेश मैंने स्वयं तुम्हारे लिये किया है । यदि इन्द्र के राज्य से भी अधिक सम्पत्ति तुम्हें प्राप्त हो, तो भी तुम इस रहस्य को मेरी भक्ति से विहीन दुष्ट पुरुष को कदापि मत बताना ॥ ५२ ॥

इसके अनन्तर, श्री महादेव जी ने कहा—हे पार्वती ! मैंने तुम्हें परम गोपनीय, मनोहर, अत्यन्त पवित्र, पापनाशक 'श्रीराम-हृदय' रहस्य का आख्यान किया ॥ ५३ ॥ यह सम्पूर्ण वेदान्तों का संग्रह है और श्री रामचन्द्रजी के द्वारा स्वयं कहा गया है । इस रामहृदय का नित्य भक्ति पूर्वक पाठ करनेवाला मनुष्य मुक्ति को प्राप्त कर लेता है, इसमें सन्देह नहीं ॥५४॥ अनेक जन्म के सञ्चित ब्रह्म हत्यादि जैसे महान् पाप इसके पठन मात्र से निःसन्देह नष्ट हो जाते हैं । श्री राम का वचन ही इसमें प्रमाण है ॥५५॥

योऽतिभ्रष्टोऽतिपापी परधनपरदारेषु नित्योद्यतो वा
स्तेयी ब्रह्मघ्न-माता-पितृवध-निरतो योगिवृन्दापकारी।
यः सम्पूज्याभिरामं पठति च हृदयं रामचन्द्रस्य भक्त्या
योगीन्द्रैरप्यलभ्यं पदमिह लभते सर्वदेवैः स पूज्यम् ॥५६॥

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे बालकाण्डे
श्रीरामहृदयं नाम प्रथमः सर्गः ॥१॥

---

जो कोई अत्यन्त भ्रष्ट, महापापी, परायी सम्पत्ति एवं परायी स्त्रियों में सदा प्रवृत्त रहने वाला, चोर, ब्रह्मघ्न, माता एवं पिता का हत्यारा, योगिजनों को उपद्रुत करने वाला मनुष्य भी श्री रामचन्द्र जी का पूजन कर भक्ति से इस रामहृदय का पाठ करे तो वह समस्त देवताओं से वन्दनीय उस परमपद को प्राप्त करता है, जो बड़े-बड़े योगिराजों के लिये भी दुर्लभ है ॥ ५६ ॥

इस प्रकार 'राम-प्रिया' हिन्दी व्याख्या सहित अध्यात्मरामायण के उमा-महेश्वर संवाद में बालकाण्ड का श्रीरामहृदय नामक प्रथम सर्ग समाप्त ॥ १ ॥

*

## २. द्वितीयः सर्गः

( भारपीडित पृथ्वी का ब्रह्मादि देवताओं के समीप जाना और भगवान् के द्वारा प्रकट होकर पृथ्वी को धैर्य बँधाना )

पार्वत्युवाच

धन्यास्म्यनुगृहीताऽस्मि कृतार्थाऽस्मि जगत्प्रभो ! ।
विच्छिन्नो मेऽतिसन्देह-ग्रन्थिर्भवदनुग्रहात् ॥१॥
त्वन्मुखाद् गलितं रामतत्त्वामृतरसायनम् ।
पिबन्त्या मे मनो देव न तृप्यति भवापहम् ॥२॥

---

पार्वती ने कहा—हे जगत्स्वामिन् ! आप के अनुग्रह से मैं धन्य और कृतकृत्य हो गयी । इतना ही नहीं, इस अनुग्रह से मेरे सन्देह की गाँठ भी टूट गयी ॥ १ ॥ हे देव ! आप के मुख से निकले हुए संसार के भय को दूर करने वाले इस रामतत्त्वरूपी अमृतमय रसायन का पान करते हुए मेरा

श्रीरामस्य कथा त्वत्तः श्रुता संक्षेपतो मया ।
इदानीं श्रोतुमिच्छामि विस्तरेण स्फुटाक्षरम् ॥३॥

श्रीमहादेव उवाच

शृणु देवि ! प्रवक्ष्यामि गुह्याद् गुह्यतरं महत् ।
अध्यात्मरामचरितं रामेणोक्तं पुरा मम ॥४॥
तदद्य कथयिष्यामि शृणु तापत्रयापहम् ।
यच्छ्रुत्वा मुच्यते जन्तुरज्ञानोत्थमहाभयात् ।
प्राप्नोति परमामृद्धिं दीर्घायुः पुत्रसन्ततिम् ॥५॥

भूमिर्भारेण मग्ना दशवदनमुखाशेष-रक्षोगणानां
धृत्वा गोरूपमादौ दिविजमुनिजनैः साकमब्जासनस्य ।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे प्राह सर्वं
ब्रह्मा ध्यात्वा मुहूर्तं सकलमपि हृदावेदशेषात्मकत्वात् ॥६॥

---

मन तृप्त नहीं हो रहा है ॥ २ ॥ मैंने आप के मुख से श्रीराम की कथा संक्षेप में सुनी थी। किन्तु अब उसे स्पष्ट शब्दों में विस्तार पूर्वक सुनना चाहती हूँ ॥ ३ ॥

श्री महादेव जी ने कहा—हे देवि ! मैं तुम्हें परमगोपनीय महान् अध्यात्मरामायण की कथा सुना रहा हूँ। जिसे श्री रामचन्द्रजी ने स्वयं मुझे सुनाया था ॥ ४ ॥ तीनों तापों को नष्ट करने वाले इस अध्यात्म-रामायण को मैं तुम्हें सुनाता हूँ। इसके सुनने मात्र से जीवों का अज्ञान-जन्य भय दूर हो जाता है और परम ऐश्वर्य, दीर्घायु तथा पुत्र-पौत्र आदि की सन्तान परम्परा प्राप्त होती है ॥ ५ ॥

एक बार रावण आदि समस्त राक्षसों के भार से पीड़ित पृथ्वी गौ का रूप धारण कर देवताओं और मुनिजनों के साथ ब्रह्मलोक को गयी। वहाँ पर जाकर उसने अपने पर पड़ा हुआ सारा दुःख ब्रह्मदेव से निवेदन किया। ब्रह्माजी ने मुहूर्त्त मात्र ध्यान मे अवस्थित हो सारा वृत्तान्त जान लिया क्योंकि वे सर्वज्ञ हैं ॥ ६ ॥

सुग्रीवेण यथा मैत्री कृत्वा वालिनिबर्हणम् ।
मार्गणार्थं च वैदेह्याः सुग्रीवेण विसर्जिताः ॥ ४१ ॥

महाबला महासत्त्वा हरयो जितकाशिनः ।
गताः सर्वत्र सर्वे वै तत्रैकोऽहमिहागतः ॥ ४२ ॥

अहं सुग्रीवसचिवो दासोऽहं राघवस्य हि ।
दृष्ट्वा यज्जानकी भाग्यात् प्रयासः फलितोऽद्य मे ॥ ४३ ॥

इत्युदीरितमाकर्ण्य सीता विस्फारितेक्षणा ।
केन वा कर्णपीयूषं श्रावितं मे शुभाक्षरम् ॥ ४४ ॥

यदि सत्यं तदायातु मद्दर्शनपथं तु सः ।
ततोऽहं वानराकारः सूक्ष्मरूपेण जानकीम् ॥ ४५ ॥

प्रणम्य प्राञ्जलिर्भूत्वा दूरादेव स्थितः प्रभो ! ।
पृष्टोऽहं सीतया कस्त्वमित्यादि बहुविस्तरम् ॥ ४६ ॥

---

रहने पर जिस प्रकार जानकी का हरण हुआ ॥ ४० ॥ फिर जिस तरह आपने सुग्रीव से मित्रता कर वाली का वध किया। इन सब कथाओं के कहने के बाद जिस प्रकार सुग्रीव के द्वारा ॥ ४१ ॥ महाबलवान्, महापराक्रमी और विजयी वानर गण सभी दिशाओं में सर्वत्र भेजे गये। उनमें मैं अकेला सुग्रीव का मन्त्री और राम का दास हूँ। सो आज भाग्यवश मैंने जानकी को यहाँ देखा। और मेरा सारा प्रयास सफल हो गया। आदि बातें जानकी से कह सुनायी ॥ ४२–४३ ॥

मेरे द्वारा कहे गये इन वचनों को सुन कर सीता आँखें फाड़-फाड़ कर चारों ओर देखने लगीं। और बोलीं—मुझे कर्णामृत के समान कल्याण कारक ये वचन किसने सुनाया है ? ॥ ४४ ॥

यदि यह सब बातें सत्य हैं तो वह मेरी दृष्टि के सामने ( संवाद सुनाने वाला ) प्रगट हो जाय। हे प्रभो ! तब मैं बड़े सूक्ष्म रूप से बन्दर के समान आकार धारण किये हुए उनके सामने प्रगट हो गया ॥४५॥ और दूर से उन्हें प्रणाम कर हाथ जोड़ खड़ा हो गया। फिर सीता जी ने तुम कौन हो ? इत्यादि बहुतसी बातें विस्तार से पूछीं ॥ ४६ ॥

मया सर्वक्रमेणैव विज्ञापितमरिन्दम ! ।
पश्चान्मयाऽर्पितं देव्यै भवद्दत्ताङ्गुलीयकम् ॥ ४७ ॥
तेन मामतिविश्वस्ता वचनं चेदमब्रवीत् ।
तथा दृष्टाऽस्मि हनुमन् ! पीड्यमाना दिवानिशम् ॥ ४८ ॥
राक्षसीनां तर्जनैस्तत्सर्वं कथय राघवे ।
मयोक्तं देवि ! रामोऽपि त्वच्चिन्तापरिनिष्ठितः ॥ ४९ ॥
परिशोचत्यहोरात्रं त्वद्वार्तां नाधिगम्य सः ।
इदानीमेव गत्वाऽहं स्थितिं रामाय ते ब्रुवे ॥ ५० ॥
रामः श्रवणमात्रेण सुग्रीवेण सलक्ष्मणः ।
वानरानीकपैः सार्धमागमिष्यति तेऽन्तिकम् ॥ ५१ ॥
रावणं सकुलं हत्वा नेष्यति त्वां स्वकं पुरम् ।
अभिज्ञां देहि मे देवि ! यथा मां विश्वसेद् विभुः ॥ ५२ ॥
इत्युक्ता सा शिरोरत्नं चूडापाशे स्थितं प्रियम् ।
दत्त्वा काकेन यद्वृत्तं चित्रकूटगिरौ पुरा ॥ ५३ ॥

---

फिर हे अरिन्दम ! मैंने भी धीरे-धीरे उनसे सारी बातें कह दीं। और आप के द्वारा दी गयी अँगूठी भी मैंने दे दी ॥ ४७ ॥ इससे उन्होंने मुझ पर पूर्ण विश्वास कर लिया। और इस प्रकार कहने लगीं—हे हनुमन् ! जिस प्रकार मैं इन राक्षसियों के द्वारा दिन रात पीड़ित हूँ। वह सब तो तुमने देख ही लिया ॥ ४८ ॥ और जिस प्रकार ये राक्षसियाँ मुझे डरा एवं धमका रही हैं यह सब यथावत् श्रीरामचन्द्र जी से कहना। तब मैंने भी कहा—हे देवि ! श्रीराम भी तुम्हारी चिन्ता में तल्लीन रहते हैं ॥ ४९ ॥

वे तुम्हारा समाचार न मिलने से दिन-रात दुःखी रहते हैं। मैं अभी जाकर तुम्हारी स्थिति रामचन्द्र जी को सुनाऊँगा ॥५०॥ तुम्हारा समाचार सुनते ही श्रीराम, लक्ष्मण, सुग्रीव एवं समस्त वानर सेनापतियों के साथ तुम्हारे पास आवेंगे ॥ ५१ ॥ और सकुटुम्ब रावण का वध कर तुम्हें अयोध्या ले जायेंगे। हे देवि ! मुझे अब कोई ऐसा चिह्न दो जिससे राम मेरे ऊपर विश्वास करें ॥ ५२ ॥ मेरे इस प्रकार कहने

तदप्याहाऽश्रुपूर्णाक्षी कुशलं ब्रूहि राघवम् ।
लक्ष्मणं ब्रूहि मे किञ्चिद् दुरुक्तं भाषितं पुरा ॥ ५४ ॥

तत्क्षमस्वाज्ञभावेन भाषितं कुलनन्दन ! ।
तारयेन्मां यथा रामस्तथा कुरु कृपान्वितः ॥ ५५ ॥

इत्युक्त्वा रुदती सीता दुःखेन महतावृता ।
मयाप्याश्वासिता राम ! वदता सर्वमेव ते ॥ ५६ ॥

ततः प्रस्थापितो राम ! त्वत्समीपमिहागतः ।
तदागमनवेलायामशोकवनिकां प्रियाम् ॥ ५७ ॥

उत्पाट्य राक्षसांस्तत्र बहून् हत्वा क्षणादहम् ।
रावणस्य सुतं हत्वा रावणेनाभिभाष्य च ॥ ५८ ॥

---

पर सीता ने अपने केशपाश में स्थित चूड़ामणि को दे दिया। और पहले चित्रकूट पर्वत पर काक के साथ हुई घटना भी सुनाई ॥ ५३ ॥

पुनः उन्होंने आँखों में आँसू भर कर कहा—श्री रघुनाथ जी से मेरा सब समाचार कहना। और लक्ष्मण से कहना कि हे कुलनन्दन ! मैंने पहले तुमसे जो कुछ भी कठोर वचन कहे थे ॥ ५४ ॥ उन अज्ञान पूर्वक कहे गये मेरे वचनों को क्षमा करें। इसके अतिरिक्त श्रीरघुनाथजी से कहना कि वे जिस प्रकार से हो कृपा कर मेरा उद्धार करें। और तुम भी ऐसी चेष्टा करना ॥ ५५ ॥ इस प्रकार कह कर सीता महान् दुःख से भर गयीं और रोने लगीं। तब मैंने भी हे राम ! आपका सब वृत्तान्त सुना कर उन्हें धीरज दिया ॥ ५६ ॥ फिर सीता से विदा हो कर मैं यहाँ के लिए चल पड़ा। आते समय मैंने रावण की अत्यन्त प्रिय अशोक वाटिका ॥ ५७ ॥ उखाड़ कर फेंक दिया। और क्षण भर में बहुतेरे राक्षसों को एवं रावण के पुत्र अक्षकुमार को मार डाला।

लङ्कामशेषतो दग्ध्वा पुनरप्यगमं क्षणात् ।
श्रुत्वा हनूमतो वाक्यं रामोऽत्यन्तप्रहृष्टधीः ॥ ५९ ॥
हनूमंस्ते कृतं कार्यं देवैरपि सुदुष्करम् ।
उपकारं न पश्यामि तव प्रत्युपकारिणः ॥ ६० ॥
इदानीं ते प्रयच्छामि सर्वस्वं मम मारुते ! ।
इत्यालिङ्ग्य समाकृष्य गाढं वानरपुङ्गवम् ॥ ६१ ॥
सार्द्रनेत्रो रघुश्रेष्ठः परां प्रीतिमवाप सः ।
हनूमन्तमुवाचेदं राघवो भक्तवत्सलः ॥ ६२ ॥
परिरम्भो हि मे लोके दुर्लभः परमात्मनः ।
अतस्त्वं मम भक्तोऽसि प्रियोऽसि हरिपुङ्गव ! ॥ ६३ ॥

---

और रावण से बात-चीत कर ॥ ५८ ॥ समस्त लङ्का जला दी। फिर क्षण भर में यहाँ चला आया। श्री हनुमान् की इस बात को सुन कर रामचन्द्र अत्यन्त प्रसन्न हुए ॥ ५९ ॥

और कहने लगे—हे हनुमान् ! तुमने जो कार्य किया है वह देवताओं से भी दुष्कर है। तुम्हारे किये गये मेरी समझ में नहीं आता कि इन उपकारों के बदले मैं कौन सा तुम्हारा उपकार करूँ ॥ ६० ॥ अब हे मारुते ! तुम्हारे इन उपकारों के बदले मैं अपना सर्वस्वभूत शरीर ही तुम्हें सौंप देता हूँ। ऐसा कह कर उन्होंने वानर-श्रेष्ठ हनुमान् जी को खींच कर गाढ आलिङ्गन किया ॥ ६१ ॥ और उस समय उनके नेत्रों में आँसू आ गये। और अत्यन्त प्रीति उमड़ पड़ी। फिर भक्तवत्सल श्रीरामचन्द्र जी हनुमान् जी से कहने लगे—॥ ६२ ॥

हे हनुमान् ! मुझ परमात्मा का यह आलिङ्गन संसार में बड़ा दुर्लभ है। इसलिए हे वानरश्रेष्ठ ! तुम मेरे परम प्रिय एवं भक्त हो ॥ ६३ ॥

यत्पादपद्मयुगलं तुलसीदलाद्यैः
सम्पूज्य विष्णुपदवीमतुलां प्रयान्ति ।
तेनैव किं पुनरसौ परिरब्धमूर्ती
रामेण वायुतनयः कृतपुण्यपुञ्जः ॥ ६४ ॥

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे
सुन्दरकाण्डे पञ्चमः सर्गः ॥ ५ ॥

समाप्तमिदं सुन्दरकाण्डम् ।

□

---

मनुष्य जिनके चरण-कमलों को तुलसी दल आदि से पूज कर परम पद को प्राप्त करते हैं, उन्हीं श्रीराम जी ने स्वयं जिसके शरीर का आलिङ्गन किया । उन महापुण्यकर्मा हनुमान् जी के विषय में क्या कहा जाय ? ॥ ६४ ॥

इस प्रकार आचार्य पण्डित श्री शिवदत्त मिश्र शास्त्रीकृत 'रामप्रिया'
हिन्दी व्याख्याविभूषित अध्यातम-रामायण के उमा-महेश्वर
संवाद में सुन्दरकाण्ड का पाँचवाँ सर्ग समाप्त ॥ ५ ॥

□

# अध्यात्मरामायणम्

## 'रामप्रिया'-हिन्दीव्याख्या-सहितम्

## युद्धकाण्डम्

□

### १. प्रथमः सर्गः

( वानरी सेनाका प्रस्थान )

महादेव उवाच

यथावद् भाषितं वाक्यं श्रुत्वा रामो हनूमतः ।
उवाचानन्तरं वाक्यं हर्षेण महताबृतः ॥ १ ॥
कार्यं कृतं हनुमता देवैरपि सुदुष्करम् ।
मनसापि यदन्येन स्मर्तुं शक्यं न भूतले ॥ २ ॥
शतयोजनविस्तीर्णं लङ्घयेत् कः पयोनिधिम् ।
लङ्कां च राक्षसैर्गुप्तां को वा धर्षयितुं क्षमः ॥ ३ ॥
भृत्यकार्यं हनुमता कृतं सर्वमशेषतः ।
सुग्रीवस्येदृशो लोके न भूतो न भविष्यति ॥ ४ ॥

---

श्रीमहादेवजी ने कहा–हे पार्वती ! हनुमान् जी के द्वारा कहे गये यथार्थ वचनों को सुन कर श्रीरामचन्द्र जी हर्ष से पूर्ण हो कर कहने लगे–॥ १ ॥ हनुमान् जी ने जो कार्य किया है, वह देवताओं के लिए भी अत्यन्त दुष्कर है। और लोग तो उनके किये गये इन कार्यों का मन से स्मरण भी नहीं कर सकते ॥ २ ॥ भला इस जगत् में ऐसा कौन है, जो सौ योजन समुद्र को लाँघ सके। और राक्षसों से सुरक्षित लङ्कापुरी को नष्ट कर सके ॥ ३ ॥ इन हनुमान् जी ने सुग्रीव की समग्र आज्ञा का पालन पूर्ण रूप से किया। इस प्रकार का आज्ञाकारी इस संसार में कोई न हुआ और न कोई आगे होगा ॥ ४ ॥

अहं च रघुवंशश्च लक्ष्मणश्च कपीश्वरः।
जानक्या दर्शनेनाद्य रक्षिताः स्मो हनूमता ॥ ५ ॥
सर्वथा सुकृतं कार्यं जानक्याः परिमार्गणम्।
समुद्रं मनसा स्मृत्वा सीदतीव मनो मम ॥ ६ ॥
कथं नक्रझषाकीर्णं समुद्रं शतयोजनम्।
लङ्घयित्वा रिपुं हन्यां कथं द्रक्ष्यामि जानकीम् ॥ ७ ॥
श्रुत्वा तु रामवचनं सुग्रीवः प्राह राघवम्।
समुद्रं लङ्घयिष्यामो महानक्रझषाकुलम् ॥ ८ ॥
लङ्कां च विधयिष्यामो हनिष्यामोऽद्य रावणम्।
चिन्तां त्यज रघुश्रेष्ठ! चिन्ता कार्यविनाशिनी ॥ ९ ॥
एतान् पश्य महासत्त्वान् शूरान् वानरपुङ्गवान्।
त्वत्प्रियार्थं समुद्युक्तान् प्रवेष्टुमपि पावकम् ॥ १० ॥
समुद्रतरणे बुद्धिं कुरुष्व प्रथमं ततः।
दृष्ट्वा लङ्कां दशग्रीवो हत इत्येव मन्महे ॥ ११ ॥

---

आज इन हनुमान् जी ने मेरी, रघुवंशमात्र की, लक्ष्मण और सुग्रीव की रक्षा जानकी का पता लगा कर की है ॥ ५ ॥ यद्यपि जानकी का पता लग जाने से यह कार्य अच्छी तरह सम्पन्न हो गया किन्तु दुर्धर्ष समुद्र की याद आने पर मेरा मन सर्वथा हताश हो रहा है ॥ ६ ॥ मैं किस प्रकार घड़ियाल एवं मकरादि भयानक जन्तुओं से पूर्ण एवं सौ योजन लम्बे समुद्र को लाँघ कर शत्रु का वध करूँगा और किस प्रकार जानकी को देख पाऊँगा ॥ ७ ॥

राम की इन बातों को सुन कर सुग्रीव उनसे कहने लगे—हे रघुश्रेष्ठ! हम महानक्र एवं मकरादि से पूर्ण इस समुद्र को लाँघ जायेंगे तथा रावण को मार कर लङ्का को तहस-नहस कर डालेंगे। आप चिन्ता का परित्याग कीजिए। क्योंकि चिन्ता से कार्य नष्ट हो जाता है ॥ ८-९ ॥ आप परम ओजस्वी इन शूर-वीर बानरों की ओर देखिए। ये लोग आप के प्रिय कार्य करने के लिए अग्नि में भी प्रवेश करने को तैयार हैं ॥ १० ॥ हे राघवेन्द्र! सर्वप्रथम समुद्र को पार करने का यत्न कीजिए। फिर लङ्का पहुँच जाने

नहि पश्याम्यहं किञ्चित् त्रिषु लोकेषु राघव ! ।
गृहीतधनुषो यस्ते तिष्ठेदभिमुखो रणे ॥ १२ ॥
सर्वथा नो जयो राम ! भविष्यति न संशयः ।
निमित्तानि च पश्यामि तथा भूतानि सर्वशः ॥ १३ ॥
सुग्रीववचनं श्रुत्वा भक्तिवीर्यसमन्वितम् ।
अङ्गीकृत्याब्रवीद्रामो हनूमन्तं पुरःस्थितम् ॥ १४ ॥
येन केन प्रकारेण लङ्घयामो महार्णवम् ।
लङ्कास्वरूपं मे ब्रूहि दुःसाध्यं देवदानवैः ॥ १५ ॥
ज्ञात्वा तस्य प्रतीकारं करिष्यामि कपीश्वर ! ।
श्रुत्वा रामस्य वचनं हनूमान् विनयान्वितः ॥ १६ ॥
उवाच प्राञ्जलिर्देव ! यथा दृष्टं ब्रवीमि ते ।
लङ्का दिव्यापुरी देव ! त्रिकूटशिखरे स्थिता ॥ १७ ॥

पर हम लोग रावण को मरा हुआ ही समझते हैं ॥ ११ ॥ हे राघव ! मुझे तो इस त्रिलोकी में भी कोई ऐसा नहीं दिखाई देता। जो आप के धनुष धारण कर लेने पर युद्ध में सामने टिक सके ॥१२॥ हे राम ! सब प्रकार से हम लोगों की विजय होगी। आप इसे निश्चित समझें, क्योंकि इस समय विजय के लक्षण चारों ओर से दिखाई पड़ रहे हैं ॥ १३ ॥

इस प्रकार भक्ति एवं शौर्य पूर्ण सुग्रीव के वचन को सुन कर श्री राम ने उसका अनुमोदन किया। फिर वे सामने खड़े हनुमान् जी से कहने लगे ॥ १४ ॥ हनुमन् ! समुद्र तो हम जैसे-तैसे पार ही कर लेंगे। अब तुम देव-दानवों से सर्वथा अजेय लङ्का का स्वरूप बताओ ॥१५॥ हे कपीश्वर ! हम लङ्का का स्वरूप जान कर विजय करने का कोई उपाय सोचेंगे। राम की बात सुन कर हनुमान् जी बड़े विनय से बोले ॥ १६ ॥

हनुमान् जी ने हाथ जोड़ कर कहा—मैंने जिस प्रकार की लङ्का देखी है वैसा आप से बताता हूँ। हे देव ! वह दिव्य पुरी लङ्का त्रिकूट पर्वत पर

स्वर्णप्राकारसहिता स्वर्णाट्टालकसंयुता ।
परिखाभिः परिवृता पूर्णाभिर्निर्मलोदकैः ॥ १८ ॥
नानोपवनशोभाढ्या दिव्यवापीभिरावृता ।
गृहैर्विचित्रशोभाढ्यैर्मणिस्तम्भमयैः शुभैः ॥ १९ ॥
पश्चिमद्वारमासाद्य गजवाहाः सहस्रशः ।
उत्तरे द्वारि तिष्ठन्ति साश्ववाहाः सपत्तयः ॥ २० ॥
तिष्ठन्त्यर्बुदसङ्ख्याकाः प्राच्यामपि तथैव च ।
रक्षिणो राक्षसा वीरा द्वारं दक्षिणमाश्रिताः ॥ २१ ॥
मध्यकक्षेऽप्यसङ्ख्याता गजाऽश्व-रथ-पत्तयः ।
रक्षयन्ति सदा लङ्कां नानास्त्रकुशलाः प्रभो ! ॥ २२ ॥
सङ्क्रमैर्विविधैर्लङ्का शतघ्नीभिश्च संयुता ।
एवं स्थितेऽपि देवेश ! शृणु मे तत्र चेष्टितम् ॥ २३ ॥
दशाननबलौघस्य चतुर्थांशो मया हतः ।
दग्ध्वा लङ्कां पुरीं स्वर्णप्रासादो धर्षितो मया ॥२४ ॥

---

बसी हुई है ॥ १७ ॥ उस लङ्का के परकोटे सोने के बने हुए हैं, वह सोने की अटारी से युक्त है। निर्मल जल से भरी हुई खाइयों से चारों ओर घिरी हुई है ॥ १८ ॥ अनेक प्रकार के उपवनों से वह सुशोभित है। तथा दिव्य वापियों से परिपूर्ण है एवं मणिमय खम्भों से युक्त मनोहर शोभासम्पन्न विचित्र गृहों से विराजित है ॥ १९ ॥ उसके पश्चिम द्वार पर सहस्रों गजारोही और उत्तर द्वार पर हजारों पैदल सेना सहित बहुतसे घुड़सवार समुद्यत रहते हैं ॥ २० ॥ उसी प्रकार पूर्वद्वार पर अरबों महावीर तथा दक्षिण द्वार पर भी इतने ही संख्या वाले राक्षस नगर के रक्षक के रूप में अवस्थित हैं ॥ २१ ॥

हे प्रभो ! नगर के मध्यभाग में असंख्य हाथी, घोड़े, रथ तथा पैदल चतुरङ्गिणी सेना स्थित होकर सावधानी से लङ्का की रक्षा करती है। यह सेना अस्त्र-शस्त्र चलाने में बहुत कुशल है ॥२२॥ इसमें आने-जाने के लिए अनेक सुरङ्ग बने हुए हैं तथा बहुत सी तोपें लगी हुई हैं। हे देवेश ! इतनी सुरक्षा करते हुए भी मैंने जो किया है उसे सुनें ॥ २३ ॥ मैंने रावण

शतघ्न्यः सङ्क्रमाश्चैव नाशिता मे रघूत्तम ! ।
देव ! त्वद्दर्शनादेव लङ्का भस्मीकृता भवेत् ॥ २५ ॥
प्रस्थानं कुरु देवेश ! गच्छामो लवणाम्बुधेः ।
तीरं सह महावीरैर्वानरौघैः समन्ततः ॥ २६ ॥
श्रुत्वा हनूमतो वाक्यमुवाच रघुनन्दनः ।
सुग्रीव ! सैनिकान् सर्वान् प्रस्थानायाभिनोदय ॥ २७ ॥
इदानीमेव विजयो मुहूर्तः परिवर्तते ।
अस्मिन् मुहूर्ते गत्वाऽहं लङ्कां राक्षससङ्कुलाम् ॥ २८ ॥
सप्राकारां सुदुर्धर्षां नाशयामि सरावणाम् ।
आनेष्यामि च सीतां मे दक्षिणाक्षि स्फुरत्यधः ॥ २९ ॥
प्रयातु वाहिनी सर्वा वानराणां तरस्विनाम् ।
रक्षन्तु यूथपाः सेनामग्रे पृष्ठे च पार्श्वयोः ॥ ३० ॥

---

की सेना का चतुर्थांश नष्ट कर दिया। सारी लङ्का जला डाली और सोने के महल विध्वस्त कर दिये ॥ २४ ॥ इतना ही नहीं, हे रघूत्तम ! मैंने सुरङ्ग एवं तोपें भी स्वाहा कर दिये। अब तो वह लङ्का आपके दृष्टि मात्र से नष्ट हो जायेगी ॥ २५ ॥

हे देवेश ! अब आप लङ्का के लिए प्रस्थान कीजिए। हम लोग भी महावीर वानरी सेना के साथ आप के चारों ओर खारे समुद्र के तट पर चलेंगे ॥ २६ ॥

हनुमान् जी की बात सुन कर श्री रामचन्द्र जी ने सुग्रीव से कहा— हे सुग्रीव ! इसी समय सभी सैनिकों को कूच करने की आज्ञा दो ॥२७॥ क्योंकि इस समय विजय नामक मुहूर्त्त वर्त्तमान है। इस मुहूर्त्त में हमें राक्षसों से परिपूर्ण लङ्का में जा कर ॥ २८ ॥ स्वर्ण परकोटे से घिरी हुई, सर्वथा अजेय, रावण सहित उस लङ्का को नष्ट करूँगा, तथा सीता को ले आऊँगा। क्योंकि इस समय मेरी दाहिनी आँख के नीचे का भाग फड़क रहा है ॥ २९ ॥

महाबलवान् वानरों की सेना इसी समय कूच करे। तथा यूथपति लोग

हनूमन्तमथारुह्य गच्छाम्यग्रेऽङ्गदं ततः ।
आरुह्य लक्ष्मणो यातु सुग्रीव ! त्वं मया सह ॥ ३१ ॥
गजो गवाक्षो गवयो मैन्दो द्विविद एव च ।
नलो नीलः सुषेणश्च जाम्बवांश्च तथाऽपरे ॥ ३२ ॥
सर्वे गच्छन्तु सर्वत्र सेनायाः शत्रुघातिनः ।
इत्याज्ञाप्य हरीन् रामः प्रतस्थे सहलक्ष्मणः ॥ ३३ ॥
सुग्रीवसहितो हर्षात् सेनामध्यगतो विभुः ।
वारणेन्द्रनिभाः सर्वे वानराः कामरूपिणः ॥ ३४ ॥
क्ष्वेलन्तः परिगर्जन्तो जग्मुस्ते दक्षिणां दिशम् ।
भक्षयन्तो ययुः सर्वे फलानि च मधूनि च ॥ ३५ ॥
ब्रुवन्तो राघवस्याऽग्रे हनिष्यामोऽद्य रावणम् ।
एवं ते वानरश्रेष्ठा गच्छन्त्यतुलविक्रमाः ॥ ३६ ॥

---

अपनी सेना के आगे-पीछे तथा बगल से चलते हुए उसकी रक्षा करें ॥ ३० ॥ हनुमान् के कन्धे पर चढ़ कर आगे-आगे मैं चलता हूँ । फिर अङ्गद के कन्धे पर चढ़ कर लक्ष्मण जो मेरे पीछे चलें । और हे सुग्रीव ! तुम मेरे साथ चलो ॥ ३१ ॥ गज, गवाक्ष, गवय, मैन्द, द्विविद, नल, नील, सुषेण तथा जाम्बवान् एवं शत्रुओं का नाश करने वाले अन्य महावीर सेना के चारों ओर से देखभाल करते हुए चलें । वानरों को इस प्रकार आज्ञा देकर श्री रामचन्द्रजी ने लक्ष्मण के साथ प्रस्थान किया ॥३२-३३॥ उस सेना के मध्य में भगवान् राम सुग्रीव के साथ बड़े हर्ष से जा रहे थे । सभी वानर गजराज के समान ऊँचे डील वाले और इच्छानुसार रूप धारण करने वाले थे ॥ ३४ ॥

इस प्रकार वे सभी वानरगण मस्ती से उछलते-कूदते, गर्जना करते हुए फल खाते तथा मधुपान करते हुए दक्षिण दिशा को चले ॥ ३५ ॥ इस भाँति महापराक्रमी वे वानर-श्रेष्ठ श्रीरामचन्द्रजी के आगे 'हम आज ही रावण का वध करेंगे' ऐसा कहते हुए जा रहे थे ॥ ३६ ॥

हरिभ्यामुह्यमानौ तौ शुशुभाते रघूत्तमौ ।
नक्षत्रैः सेवितौ यद्वच्चन्द्रसूर्याविवाम्बरे ॥ ३७ ॥

आवृत्य पृथिवीं कृत्स्नां जगाम महती चमूः ।
प्रस्फोटयन्तः पुच्छाग्रानुद्वहन्तश्च पादपान् ॥ ३८ ॥
शैलानारोहयन्तश्च जग्मुर्मारुतवेगतः ।
असङ्ख्याताश्च सर्वत्र वानराः परिपूरिताः ॥ ३९ ॥
हृष्टास्ते जग्मुरत्यर्थं रामेण परिपालिताः ।
गता चमूर्दिवारात्रं क्वचिन्नासज्जत क्षणम् ॥ ४० ॥
काननानि विचित्राणि पश्यन् मलयसह्ययोः ।
ते सह्यं समतिक्रम्य मलयं च तथा गिरीन् ॥ ४१ ॥
आययुश्चानुपूर्व्येण समुद्रं भीमनिःस्वनम् ।
अवतीर्य हनूमन्तं रामः सुग्रीवसंयुतः ॥ ४२ ॥
सलिलाभ्याशमासाद्य रामो वचनमब्रवीत् ।
आगता स्मो वयं सर्वे समुद्रं मकरालयम् ॥ ४३ ॥

---

अङ्गद और हनुमान् जी के द्वारा कन्धों पर ले जाये जाते हुए वे दोनों रघुश्रेष्ठ, आकाशमण्डल में नक्षत्रों से सुशोभित सूर्य तथा चन्द्रमा—जैसे शोभायमान हो रहे थे ॥३७॥ वह सेना उस समय पृथ्वी को ढक कर चल रही थी। वे वानर पूँछ फटकारते हुए तथा वृक्षों को उखाड़ते हुए ॥ ३८ ॥ एवं पर्वतों पर उछल-कूद करते हुए वायु के वेग से चल रहे थे। उस समय चारों ओर असंख्य वानर भरे हुए दिखाई दे रहे थे ॥ ३९ ॥ राम से सुरक्षित होकर वे वानर रात-दिन बड़े वेग से चल रहे थे। एक क्षण के लिए भी उन्होंने कहीं विश्राम नहीं किया ॥ ४० ॥

उन लोगों ने मलय एवं सह्य पर्वत के विचित्र वन-विभागों को देखते हुए क्रमशः सह्य तथा मलय पर्वत पार कर लिया। फिर वे भयानक गर्जना करते हुए समुद्र के तट पर आ पहुँचे। तब हनुमान् के कन्धे से उतर कर श्रीराम जो सुग्रीव के साथ समुद्र तट पर आये और वानरों से बोले—अब हम लोग मकरादि परिपूर्ण इस समुद्र तट

इतो गन्तुमशक्यं नो निरुपायेन वानराः ।
तत्र सेनानिवेशोऽस्तु मन्त्रयामोऽस्य तारणे ॥ ४४ ॥
श्रुत्वा रामस्य वचनं सुग्रीवः सागरान्तिके ।
सेनां न्यवेशयत् क्षिप्रं रक्षितां कपिकुञ्जरैः ॥ ४५ ॥
ते पश्यन्तो विषेदुस्तं सागरं भीमदर्शनम् ।
महोन्नततरङ्गाढ्यं भीमनक्रभयङ्करम् ॥ ४६ ॥
अगाधं गगनाकारं सागरं वीक्ष्य दुःखिताः ।
तरिष्यामः कथं घोरं सागरं वरुणालयम् ॥ ४७ ॥
हन्तव्योऽस्माभिरद्यैव रावणो राक्षसाधमः ।
इति चिन्ताकुलाः सर्वे रामपार्श्वे व्यवस्थिताः ॥ ४८ ॥
रामः सीतामनुस्मृत्य दुःखेन महतावृतः ।
विलप्य जानकीं सीतां बहुधा कार्यमानुषः ॥ ४९ ॥
अद्वितीयश्चिदात्मकः परमात्मा सनातनः ।
यस्तु जानाति रामस्य स्वरूपं तत्त्वतो जनः ॥ ५० ॥

पर पहुँच गये ॥ ४१-४३ ॥ किन्तु अब आगे बिना कोई उपाय किये जाना असम्भव है । अब यहीं सेना की छावनी डाल दी जाय, फिर समुद्र पार करने के लिए परामर्श करेंगे ॥ ४४ ॥

राम की इस बात को सुनकर सुग्रीव ने वहीं समुद्र तट पर सेना का निवेश स्थापित कर दिया । तथा प्रधान-प्रधान वीरों के द्वारा उसकी रक्षा की व्यवस्था भी कर दी ॥ ४५ ॥ वे महाभयानक नक्रादिजीवों एवं उत्ताल तरङ्गों से परिपूर्ण उस समुद्र को देख कर हताश हो गये ॥ ४६ ॥ आकाश के समान अगाध समुद्र को देख कर वे बड़े दुःखी हुए। और विचार करने लगे कि इतने बड़े दुस्तर समुद्र को हम किस प्रकार पार कर सकेंगे ॥ ४७ ॥ हम तो आज ही राक्षसराज रावण को मार सकते थे ( पर अब करें तो क्या ? ) इस चिन्ता से व्यग्र होकर सब राम के पास बैठ गये ॥ ४८ ॥ इधर राम भी सीता का स्मरण कर महादुःखी हुए । यद्यपि वे अद्वय, आनन्द स्वरूप, सनातन परमात्मा थे तथापि कार्य वश मनुष्य शरीर धारण कर वे जानकी के लिए समुद्र तट पर विलाप

तं न स्पृशति दुःखादि किमुतानन्दमव्ययम् ।
दुःख-हर्ष-भय-क्रोध-लोभ-मोह-मदादयः ॥ ५१ ॥
अज्ञानलिङ्गान्येतानि कुतः सन्ति चिदात्मनि ।
देहाभिमानिनो दुःखं न देहस्य चिदात्मनः ॥ ५२ ॥
सम्प्रसादे द्वयाभावात् सुखमात्रं हि दृश्यते ।
बुद्ध्याद्यभावात् संशुद्धे दुःखं तत्र न दृश्यते ।
अतो दुःखादिकं सर्वं बुद्धेरेव न संशयः ॥ ५३ ॥
रामः परमात्मा पुरुषः पुराणो नित्योदितो नित्यसुखो निरीहः ।
तथापि मायागुणसङ्गतोऽसौ सुखीव दुःखीव विभाव्यतेऽबुधैः ॥५४॥

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे
युद्धकाण्डे प्रथमः सर्गः ॥ १ ॥



---

करने लगे। जो पुरुष परमात्मा राम के यथार्थ रूप को जानता है, जब उसे भी दुःखादि स्पर्श नहीं कर सकते फिर तो आनन्द स्वरूप अविनाशी परमात्मा की बात ही क्या है? दुःख, हर्ष, भय, क्रोध एवं अहङ्कार तो अज्ञान के चिह्न हैं। वे ज्ञान स्वरूप उस परमात्मा में हो भी कैसे सकते हैं? दुःख तो उसे होता है, जो देहादि में आसक्ति रखता है। चेतन आत्मा को दुःख किस प्रकार हो सकता है॥ ४९–५२ ॥ आत्मा के प्रत्यक्ष हो जाने पर द्वैत के अभाव के कारण केवल सुख का ही अनुभव होता है। वहाँ तो बुद्धि आदि का अभाव हो जाता है। संशुद्ध आत्मा में दुःख का लेश भी नहीं रहता। इस लिए दुःखादि बुद्धि के धर्म हैं, इसमें सन्देह नहीं॥ ५३ ॥

वे श्री राम परमात्मा, पुराण पुरुष, प्रकाशस्वरूप, नित्य सुख स्वरूप तथा निरीह हैं। किन्तु अज्ञानी पुरुष को माया के गुण के सम्बन्ध से सुखी तथा दुःखी–जैसे प्रतीत होते हैं॥ ५४ ॥

इस प्रकार 'रामप्रिया' हिन्दी व्याख्या विभूषित अध्यात्म-रामायण के उमा-महेश्वर संवाद में युद्धकाण्ड का प्रथम सर्ग समाप्त॥ १ ॥



# द्वितीयः सर्गः

( रावण द्वारा विभीषण का तिरस्कार )

श्रीमहादेव उवाच

लङ्कायां रावणो दृष्ट्वा कृतं कर्म हनूमता ।
दुष्करं दैवतैर्वापि ह्रिया किञ्चिदवाङ्मुखः ॥ १ ॥
आहूय मन्त्रिणः सर्वानिदं वचनमब्रवीत् ।
हनूमता कृतं कर्म भवद्भिर्दृष्टमेव तत् ॥ २ ॥
प्रविश्य लङ्कां दुर्धर्षां दृष्ट्वा सीतां दुरासदाम् ।
हत्वा च राक्षसान् वीरानक्षं मन्दोदरीसुतम् ॥ ३ ॥
दग्ध्वा लङ्कामशेषेण लङ्घयित्वा च सागरम् ।
युष्मान् सर्वानतिक्रम्य स्वस्थोऽगात् पुनरेव सः ॥ ४ ॥
किं कर्तव्यमितोऽस्माभिर्यूयं मन्त्रविशारदाः ।
मन्त्रयध्वं प्रयत्नेन यत्कृतं मे हितं भवेत् ॥ ५ ॥

---

श्री महादेवजी ने कहा—हे पार्वती ! इधर रावण ने हनुमान् जी के द्वारा लङ्का में किये गये देवताओं से भी असाध्य कार्य को देख कर अपना सिर नीचे झुका लिया ॥ १ ॥ पुनः उसने मन्त्रिगणों को बुला कर कहा—हनुमान् ने जैसा कार्य किया है उसे तो आप लोगों ने प्रत्यक्ष देखा ही है ॥ २ ॥ उसने शत्रुओं से सर्वथा दुष्प्रवेश्य लङ्का में घुस कर दुष्प्राप्य सीता को देखा । फिर महाबलवान् राक्षसों एवं मन्दोदरी-पुत्र अक्षय कुमार का वध किया ॥ ३ ॥ तदनन्तर सम्पूर्ण लङ्कापुरी जला कर आप लोगों को अपमानित कर और सागर को सकुशल लाँघ कर लौट गया ॥ ४ ॥ आप सभी राजनीति में बहुत निपुण हैं । अतः अब हमें क्या करना चाहिए । और क्या करने से हमारा हित होगा । इस बात का प्रयत्न पूर्वक विचार कीजिए ॥ ५ ॥

रावणस्य वचः श्रुत्वा राक्षसास्तमथाब्रुवन् ।
देव ! शङ्का कुतो रामात्तव लोकजितो रणे ॥ ६ ॥
इन्द्रस्तु बद्ध्वा निक्षिप्तः पुत्रेण तव पत्तने ।
जित्वा कुबेरमानीय पुष्पकं भुज्यते त्वया ॥ ७ ॥
यमो जितः कालदण्डाद् भयं नाऽभूत्तव प्रभो ! ।
वरुणो हुङ्कृतेनैव जितः सर्वेऽपि राक्षसाः ॥ ८ ॥
मयो महासुरो भीत्या कन्यां दत्त्वा स्वयं तव ।
त्वद्वशे वर्ततेऽद्यापि किमुतान्ये महासुराः ॥ ९ ॥
हनूमद्धर्षणं यत्तु तदवज्ञाकृतं च नः ।
वानरोऽयं किमस्माकमस्मिन् पौरुषदर्शने ॥ १० ॥
इत्युपेक्षितमस्माभिर्धर्षणं तेन किं भवेत् ? ।
वयं प्रमत्ताः किं तेन वञ्चिताः स्मो हनूमता ॥ ११ ॥

---

रावण की बात को सुन कर राक्षसों ने उससे कहा--हे देव ! आप ने तो युद्ध में त्रिलोकी को भी जीत लिया है। अतः इस राम से आप क्यों सशङ्कित हो रहे हैं ॥ ६ ॥ आपके पुत्र मेघनाद ने इन्द्र को भी बाँध कर लङ्कापुरी में डाल दिया था। आप ने युद्ध में कुबेर को जीत कर उसके पुष्पक विमान को छीन लिया। जिसका स्वयं आप ही उपभोग भी करते हैं ॥ ७ ॥ आपने यमराज को जीत लिया है। उस समय उसके कालदण्ड का भी आप को भय नहीं हुआ। इतना ही नहीं, आप अपने हुङ्कार मात्र से वरुण एवं समस्त राक्षसों को भी जीत लिया है ॥ ८ ॥ मय नामक राक्षस ने आप के भय से अपनी कन्या आप को दे दी। और वह स्वयं अभी तक आपके वश में रहता है। फिर और राक्षसों की बात ही क्या है ? ॥ ९ ॥

हनुमान् के द्वारा हम लोगों का जो अपमान हुआ है। वह तो हमारी उपेक्षा के कारण ही हुआ है। हम लोगों ने उस समय ऐसा सोचा था कि यह वानर है, इसमें पुरुषार्थ दिखाना व्यर्थ है ॥ १० ॥ हम लोगों की असावधानी से यदि उसने तिरस्कार कर दिया तो उससे क्या हुआ ? अवश्य ही उसके द्वारा इस प्रकार धोखा दिये जाने में हमारी असावधानी

जानीमो यदि तं सर्वे कथं जीवन् गमिष्यति।
आज्ञापय जगत्कृत्स्नमवानरममानुषम् ॥ १२ ॥
कृत्वा यास्यामहे सर्वे प्रत्येकं वा नियोजय।
कुम्भकर्णस्तदा प्राह रावणं राक्षसेश्वरम् ॥ १३ ॥
आरब्धं यत्त्वया कर्म स्वात्मनाशाय केवलम्।
न दृष्टोऽसि तदा भाग्यात्त्वं रामेण महात्मना ॥ १४ ॥
यदि पश्यति रामस्त्वां जीवन्नायासि रावण!
रामो न मानुषो देवः साक्षान्नारायणोऽव्ययः ॥ १५ ॥
सीता भगवती लक्ष्मी रामपत्नी यशस्विनी।
राक्षसानां विनाशाय त्वयानीता सुमध्यमा ॥ १६ ॥
विषपिण्डमिवागीर्य महामीनो यथा तथा।
आनीता जानकी पश्चात्त्वया किं वा भविष्यति ॥ १७ ॥

---

कारण है ॥ ११ ॥ यदि हम लोग उसे ऐसा समझते तो क्या वह जीवित लौट सकता था। आप हमें आज्ञा दें, हम लोग अभी इस पृथ्वी को वानर एवं मनुष्यों से रहित कर देंगे ॥ १२ ॥ अथवा हम लोगों में से एक-एक को इस कार्य के लिए नियुक्त कीजिए। उसी समय कुम्भकर्ण राक्षस-राज रावण से बोला—॥ १३ ॥

आपने जिस कार्य का आरम्भ किया है, वह केवल आत्म विनाश के लिए ही किया है। यह तो तुम्हारा महान् सौभाग्य ही है कि सीता के अपहरण काल में महात्मा राम ने तुम्हें नहीं देखा ॥ १४ ॥ हे रावण! यदि उस समय राम तुम्हें देख लेते तो तुम जीते जी लौट नहीं सकते थे। राम न तो मनुष्य हैं और न तो देवता ही हैं। वे तो साक्षात् अव्यय नारायण हैं ॥ १५ ॥ और यशस्विनी परम सुन्दरी रामपत्नी सीता साक्षात् महालक्ष्मी हैं। निश्चय ही तुम समस्त राक्षसों के विनाश के लिए सीता को ले आये हो ॥ १६ ॥

जैसे महामत्स्य विष-पिण्ड को निगल जाता है परिणाम नहीं सोचता। उसी प्रकार तुम भी आत्म-विनाश के लिए सीता को ले आये हो। अभी

यद्यप्यनुचितं कर्म त्वया कृतमजानता।
सर्वं समं करिष्यामि स्वस्थचित्तो भव प्रभो !॥ १८॥
कुम्भकर्णवचः श्रुत्वा वाक्यमिन्द्रजिदब्रवीत्।
देहि देव ! ममानुज्ञां हत्वा रामं सलक्ष्मणम्।
सुग्रीवं वानरांश्चैव पुनर्यास्यामि तेऽन्तिकम्॥ १९॥
तत्रागतो भागवतप्रधानो विभीषणो बुद्धिमतां वरिष्ठः।
श्रीरामपादद्वय एकतानः प्रणम्य देवारिमुपोपविष्टः॥२०॥
विलोक्य कुम्भश्रवणादिदैत्यान् मत्तप्रमत्तानतिविस्मयेन।
विलोक्य कामातुरमप्रमत्तो दशाननं प्राह विशुद्धबुद्धिः॥२१॥
न कुम्भकर्णेन्द्रजितौ च राजंस्तथा महापार्श्वमहोदरौ तौ।
निकुम्भकुम्भौ च तथाऽतिकायः स्थातुं न शक्ता युधि राघवस्य॥२२॥

---

आगे क्या होगा ? समझ में नहीं आता॥ १७॥ यद्यपि आपने अनजान में यह सब अनुचित कार्य किया है। फिर भी आप शान्त रहें। मैं सब कुछ ठीक किये देता हूँ॥ १८॥

कुम्भकर्ण की बात सुन कर मेघनाद ने कहा—हे देव ! मुझे आज्ञा दीजिए। मैं राम, लक्ष्मण, सुग्रीव एवं समस्त वानर गणों को मार कर अभी आप के पास आ जाता हूँ॥ १९॥ उसी समय भगवद्-भक्तों में प्रधान, महाबुद्धिमान् विभीषण जी वहाँ आये। श्री रामचन्द्र के चरण-युगलों में उनका मन एकाग्रता पूर्वक लगा हुआ था। फिर वे देवारि रावण को प्रणाम कर उसके सन्निकट बैठ गये॥ २०॥ सर्व-प्रथम उन्होंने वहाँ मदोन्मत्त कुम्भकर्णादि दैत्यों को बड़े आश्चर्य से देखा। पुनः कामातुर रावण से वे निर्मल बुद्धि वाले विभीषण सावधानी के साथ कहने लगे॥२१॥

हे राजन् ! राम के सामने युद्ध में कुम्भकर्ण, मेघनाद, महापार्श्व, महोदर, निकुम्भ, कुम्भ एवं अतिकाय आदि कोई भी राक्षस टिक नहीं

सीताभिधानेन महाग्रहेण ग्रस्तोऽसि राजन् ! न च ते विमोक्षः ।
तामेव सत्कृत्य महाधनेन दत्त्वाऽभिरामाय सुखी भव त्वम् ॥२३॥
यावन्न रामस्य शिताः शिलीमुखा लङ्कामभिव्याप्य शिरांसि रक्षसाम् ।
छिन्दन्ति तावद्रघुनायकस्य भो ! तां जानकीं त्वं प्रतिदातुमर्हसि ॥२४॥
यावन्नगाभाः कपयो महाबला हरीन्द्रतुल्या नखदंष्ट्रयोधिनः ।
लङ्कां समाक्रम्य विनाशयन्ति ते तावद् द्रुतं देहि रघूत्तमाय ताम् ॥२५॥
जीवन्न रामेण विमोक्ष्यसे त्वं गुप्तः सुरेन्द्रैरपि शङ्करेण ।
न देवराजाङ्कगतो न मृत्योः पाताललोकानपि सम्प्रविष्टः ॥२६॥
शुभं हितं पवित्रं च विभीषणवचः खलः ।
प्रतिजग्राह नैवाऽसौ म्रियमाण इवौषधम् ॥ २७ ॥

---

सकते ॥ २२ ॥ हे राजन् ! तुम इस समय सीता नामक महाग्रह से ग्रस लिये गये हो । जिससे तुम्हारा छुटकारा पाना असम्भव है । यदि आप अपना छुटकारा पाकर सुखी रहना चाहते हैं तो आप बहुत धन के साथ उस सीता को राम के पास लौटा दीजिए ॥ २३ ॥ हे रावण ! राम के तीक्ष्ण बाण जब तक लङ्का में व्याप्त होकर राक्षसों का सिर नहीं काटते, तब तक उचित यही है कि आप उन्हें जानकी लौटा दें ॥ २४ ॥ जब तक हाथी के समान डील डौल वाले ऊँचे-ऊँचे सिंह के समान महा-बलवान् वानर अपने तीक्ष्ण नख एवं दाँतों से लङ्का में पहुँच कर उसको नष्ट-भ्रष्ट नहीं करते तब तक आप सीता जी को जल्द से जल्द राम के पास लौटा दीजिए ॥ २५ ॥

विष्णु और शङ्कर भी यदि आप की रक्षा करें अथवा इन्द्र एवं मृत्यु भी अपनी गोद में लेकर आप को बचाना चाहे या आप पाताल लोक में ही क्यों न प्रविष्ट हो जायँ किन्तु आप राम से जीवित बच नहीं सकते ॥ २६ ॥

इस प्रकार विभीषण द्वारा कहे गये शुभ, हितकारी एवं पवित्र वचन सुन कर वह दुष्ट रावण उसे इसी प्रकार ग्रहण नहीं कर सका जैसे मरने वाला पुरुष औषध ग्रहण नहीं करता ॥ २७ ॥

कालेन नोदितो दैत्यो विभीषणमथाऽब्रवीत् ।
मद्दत्तभोगैः पुष्टाङ्गो मत्समीपे वसन्नपि ॥ २८ ॥
प्रतीपमाचरत्येष ममैव हितकारिणः ।
मित्रभावेन शत्रुर्मे जातो नास्त्यत्र संशयः ॥ २९ ॥
अनार्येण कृतघ्नेन सङ्गतिर्मे न युज्यते ।
विनाशमभिकाङ्क्षन्ति ज्ञातीनां ज्ञातयः सदा ॥ ३० ॥
योऽन्यस्त्वेवंविधं ब्रूयाद् वाक्यमेकं निशाचरः ।
हन्मि तस्मिन क्षणे एव धिक् त्वां रक्षःकुलाधमम् ॥ ३१ ॥
रावणेनैवमुक्तः सन् परुषं स विभीषणः ।
उत्पपात सभामध्याद् गदापाणिर्महाबलः ॥ ३२ ॥
चतुर्भिर्मन्त्रिभिः सार्धं गगनस्थोऽब्रवीद् वचः ।
क्रोधेन महताविष्टो रावणं दशकन्धरम् ।
मा विनाशमुपैहि त्वं प्रियवादिनमेव माम् ॥ ३३ ॥

---

किन्तु काल से प्रेरित वह दैत्य रावण विभीषण से इस प्रकार कहने लगा—भला देखो तो सही, हमारे सन्निधान में रहता हुआ और हमारे ही कौरों पर पला हुआ ॥ २८ ॥ यह मुझ हितकारी के विरुद्ध आचरण करता है। अवश्य ही यह मित्र रूप से मेरा शत्रु उत्पन्न हुआ है, इसमें सन्देह नहीं ॥ २९ ॥ अतः इस अनार्य एवं कृतघ्न के साथ मुझे रहना अच्छा नहीं जान पड़ता। प्रायः देखने में यही आता है कि कुटुम्बी जन अपने कुटुम्बी के नाश की इच्छा किया करते हैं ॥ ३० ॥ यदि कोई अन्य राक्षस मेरे विरुद्ध इस प्रकार का एक वाक्य भी कहता तो मैं उसे उसी क्षण मार डालता। अतः राक्षस कुलाधम तुम्हारे-जैसे नीच को धिक्कार है ॥ ३१ ॥

रावण के द्वारा इस प्रकार कठोर वचन कहे जाने पर महाबली विभीषण अपने हाथ में गदा लिये हुए सभा के मध्य से आकाश में उड़ गये ॥ ३२ ॥ और अपने चार मन्त्रियों के साथ आकाश में स्थित होकर बड़े क्रोध से दशकन्धर रावण से इस प्रकार कहने लगे—हे रावण ! तुम्हारा

धिक् करोषि तथापि त्वं ज्येष्ठो भ्राता पितुः समः ।
कालो राघवरूपेण जातो दशरथालये ॥ ३४ ॥
काली सीताभिधानेन जाता जनकनन्दिनी ।
तावुभावागतावत्र भूमेर्भारापनुत्तये ॥ ३५ ॥
तेनैव प्रेरितस्त्वं तु न शृणोषि हितं मम ।
श्रीरामः प्रकृतेः साक्षात् परस्तात् सर्वदा स्थितः ॥ ३६ ॥
बहिरन्तश्च भूतानां समः सर्वत्र संस्थितः ।
नामरूपादिभेदेन तत्तन्मय इवामलः ॥ ३७ ॥
यथा नानाप्रकारेषु वृक्षेष्वेको महानलः ।
तत्तदाकृतिभेदेन भिद्यतेऽज्ञानचक्षुषाम् ॥ ३८ ॥
पञ्चकोशादिभेदेन तत्तन्मय इवाबभौ ।
नीलपीतादियोगेन निर्मलः स्फटिको यथा ॥ ३९ ॥

---

नाश न हो इस विचार से मैंने तुम्हारे हित की बात कही ॥ ३३ ॥ किन्तु तुम मुझे ही धिक्कारते हो, अस्तु चाहे जो भी कहो क्योंकि तुम जेठे भाई हो और मेरे पिता के समान हो। पर इतना जान लो कि तुम्हारा काल राम के रूप से दशरथ के घर जन्म ले चुका है ॥ ३४ ॥ और महाकाली भी शक्ति रूप से जनक की कन्या के रूप में अवतरित हो चुकी हैं। ये दोनों पृथ्वी का भार उतारने के लिए ही इस पृथ्वी तल पर अवतीर्ण हुए हैं ॥ ३५ ॥ उन्हीं महाकाल एवं महाकाली की प्रेरणा से तुम हमारी हित की बात नहीं सुनते। भगवान् राम सर्वथा प्रकृति से परे हैं ॥ ३६ ॥ वे प्राणी मात्र के भीतर और बाहर सर्वदा समान रूप से स्थित हैं। और निर्मल हैं। वे केवल नाम रूप के भेद से भिन्न जैसे भासते हैं ॥ ३७ ॥

जिस प्रकार अनेक प्रकार के वृक्षों में एक ही महान् अग्नि भासित होती है। अथवा जिस प्रकार एक ही शुद्ध स्फटिक मणि नील पीतादि रंगों के सन्निधि मात्र से नील पीत रंग की भासती है। उसी प्रकार अज्ञानियों के लिए यह शुद्ध अद्वय आत्मा भी आकृति भेद से और पञ्च कोश ( अन्नमय, प्राणमय, मनोमय, विज्ञानमय, आनन्दमय ) भेद से नाना प्रकार का भासता है ॥ ३८-३९ ॥

स एव नित्यमुक्तोऽपि स्वमायागुणबिम्बितः ।
कालः प्रधानं पुरुषोऽव्यक्तं चेति चतुर्विधः ॥ ४० ॥
प्रधानपुरुषाभ्यां स जगत्कृत्स्नं सृजत्यजः ।
कालरूपेण कलनां जगतः कुरुतेऽव्ययः ॥ ४१ ॥
कालरूपी स भगवान् रामरूपेण मायया ॥ ४२ ॥
ब्रह्मणा प्रार्थितो देवस्त्वद्वधार्थमिहागतः ।
तदन्यथा कथं कुर्यात् सत्यसङ्कल्प ईश्वरः ॥ ४३ ॥
हनिष्यति त्वां रामस्तु सपुत्रबलवाहनम् ।
हन्यमानं न शक्नोमि द्रष्टुं रामेण रावण ! ॥ ४४ ॥
त्वां राक्षसकुलं कृत्स्नं ततो गच्छामि राघवम् ।
मयि याते सुखी भूत्वा रमस्व भवने चिरम् ॥ ४५ ॥

---

यद्यपि वह आत्मा नित्य मुक्त है तथापि अपने माया के गुणों से प्रतिबिम्बित होकर काल, प्रधान, पुरुष एवं अव्यक्त रूप से चार प्रकार का कहा गया है ॥ ४० ॥

ब्रह्मा, प्रधान एवं पुरुष रूप से इस सारे जगत् की सृष्टि करते हैं। और वही अव्यय कालरूप से इस जगत् का संहार करते हैं ॥ ४१ ॥ वे ही काल रूपी भगवान् ब्रह्मा के द्वारा प्रार्थना किये जाने पर तुम्हारे वध के लिए माया से राम के रूप में यहाँ आये हुए हैं। ईश्वर सत्य संकल्प है। भला वह अपनी प्रतिज्ञा अन्यथा किस प्रकार कर सकता है ॥ ४२-४३ ॥

राम निश्चय ही पुत्र, सेना एवं वाहन सहित तुम्हारा सर्वनाश करेंगे। और हे रावण ! मैं राम के द्वारा सम्पूर्ण राक्षस वंश का इस प्रकार संहार होते हुए देख नहीं सकता ॥ ४४ ॥ अतः मैं अब रामके पास जा रहा हूँ। आप मेरे चले जाने पर आनन्द से अपने भवन में रह कर चिरकाल पर्यन्त भोग भोगिए ॥ ४५ ॥

**विभीषणो रावणवाक्यतः क्षणाद् विसृज्य सर्वं सपरिच्छदं गृहम् ।**
**जगाम रामस्य पदारविन्दयोः सेवाभिकाङ्क्षी परिपूर्णमानसः ॥४६॥**

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे
युद्धकाण्डे द्वितीयः सर्गः ॥ २ ॥



# तृतीयः सर्गः

( विभीषण की शरणागति, समुद्र का भयभीत होना तथा सेतु-बन्धन )

श्रीमहादेव उवाच

**विभीषणो महाभागश्चतुर्भिर्मन्त्रिभिः सह ।**
**आगत्य गगने रामसम्मुखे समवस्थितः ॥ १ ॥**
**उच्चैरुवाच भो स्वामिन् ! राम ! राजीवलोचन ! ।**
**रावणस्याऽनुजोऽहं ते दारहर्तुर्विभीषणः ॥ २ ॥**
**नाम्ना भ्रात्रा निरस्तोऽहं त्वामेव शरणं गतः ।**
**हितमुक्तं मया देव ! तस्य चाविदितात्मनः ॥ ३ ॥**

---

इस प्रकार सन्तुष्ट चित्त विभीषण रावण के कठोर वचनों से एक क्षण में ही समस्त ऐश्वर्य पूर्ण अपने घर को छोड़ कर राम के चरणारविन्द की सेवा की इच्छा से उनके पास चले गये ॥ ४६ ॥

इस प्रकार 'रामप्रिया' हिन्दी व्याख्या विभूषित अध्यात्म-रामायण के उमा-महेश्वर संवाद में युद्धकाण्ड का द्वितीय सर्ग समाप्त ॥ २ ॥



श्री महादेवजी ने कहा—हे पार्वति ! इस प्रकार महाभाग विभीषण अपने चार मन्त्रियों के साथ आकर आकाश में राम के सामने उपस्थित हो गये ॥१॥ और ऊँचे स्वर से कहने लगे—हे स्वामिन् ! हे राम ! हे कमल-नयन ! मैं आपके भार्यापहारी रावण का छोटा भाई हूँ। मेरा नाम विभीषण है ॥ २ ॥ हे प्रभो ! मेरे भाई ने मुझे निकाल दिया है। अतः मैं

सीतां रामाय वैदेहीं प्रेषयेति पुनः पुनः ।
उक्तोऽपि न शृणोत्येव कालपाशवशं गतः ॥ ४ ॥

हन्तुं मां खड्गमादाय प्राद्रवद्राक्षसाधमः ।
ततोऽचिरेण सचिवैश्चतुर्भिः सहितो भयात् ॥ ५ ॥

त्वामेव भवमोक्षाय मुमुक्षुः शरणं गतः ।
विभीषणवचः श्रुत्वा सुग्रीवो वाक्यमब्रवीत् ॥ ६ ॥

विश्वासार्हो न ते राम ! मायावी राक्षसाधमः ।
सीताहर्तुर्विशेषेण रावणस्याऽनुजो बली ॥ ७ ॥

मन्त्रिभिः सायुधैरस्मान् विवरे निहनिष्यति ।
तदाज्ञापय मे देव ! वानरैर्हन्यतामयम् ॥ ८ ॥

ममैवं भाति ते राम ! बुद्ध्या किं निश्चितं वद ? ।
श्रुत्वा सुग्रीववचनं रामः सस्मितमब्रवीत् ॥ ९ ॥

---

आपकी शरण आया हूँ। हे देव ! मैंने उस मूर्ख के हित की बात कही थी ॥ ३ ॥ हे नाथ ! मैंने उससे यही बात बारम्बार कही थी कि तुम सीता को राम के पास लौटा दो किन्तु वह दुरात्मा काल के वशीभूत होने से मेरी बात नहीं सुनता ॥ ४ ॥ जब वह मुझे मारने के लिए तलवार लेकर दौड़ा तो मैं भयभीत होकर बड़ी शीघ्रता से अपने चार मन्त्रियों के साथ ॥ ५ ॥ संसाररूपी पाश से मुक्त होने के लिए मुमुक्षु होकर आपकी शरण आया हूँ। विभीषण की इस बात को सुनकर सुग्रीव ने कहा——॥६॥

हे राम ! इस मायावी राक्षसाधम का विश्वास नहीं करना चाहिए, विशेष कर सीता का हरण करने वाले राक्षराज रावण के इस बलवान् छोटे भाई का तो कथमपि विश्वास नहीं करना चाहिये ॥ ७ ॥ यह कभी भी अवसर पाकर अपने सशस्त्र मन्त्रियों के साथ हम लोगों का वध भी कर सकता है, इसलिए हे देव ! इसके वध के लिए हमें आप आज्ञा दें। मैं अभी इसे वानरों से मरवा डालूँ ॥ ८ ॥ हे राम ! मुझे तो यही ठीक जँचता है। आप ने इस विषय में क्या सोचा है, मुझे बताइए। सुग्रीव की बात सुन कर राम ने मन्द-मन्द मुस्कराते हुए कहा——॥ ९ ॥

यदीच्छामि कपिश्रेष्ठ ! लोकान् सर्वान् सहेश्वरान् ।
निमिषार्धेन संहन्यां सृजामि निमिषार्धतः ॥ १० ॥
अतो मयाभयं दत्तं शीघ्रमानय राक्षसम् ॥ ११ ॥
सकृदेव प्रपन्नाय तवाऽस्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ १२ ॥
रामस्य वचनं श्रुत्वा सुग्रीवो हृष्टमानसः ।
विभीषणमथानाय्य दर्शयामास राघवम् ॥ १३ ॥
विभीषणस्तु साष्टाङ्गं प्रणिपत्य रघूत्तमम् ।
हर्षगद्गदया वाचा भक्त्या च परयान्वितः ॥ १४ ॥
रामं श्यामं विशालाक्षं प्रसन्नमुखपङ्कजम् ।
धनुर्बाणधरं शान्तं लक्ष्मणेन समन्वितम् ॥ १५ ॥
कृताञ्जलिपुटो भूत्वा स्तोतुं समुपचक्रमे ॥ १६ ॥

---

हे कपिश्रेष्ठ ! यदि मैं चाहूँ तो आधे निमेष में ही लोकपालों सहित सारे लोक को नष्ट कर दूँ । और आधे निमेष में इसकी रचना भी कर दूँ । अतः तुम कोई चिन्ता मत करो ॥ १० ॥ मैं इस राक्षस को अभय दान देता हूँ । तुम शीघ्र ही इसे हमारे पास लाओ ॥ ११ ॥ हे सुग्रीव ! मेरा यह व्रत है कि जो एक बार भी मेरी शरण में आकर 'मैं तुम्हारा हूँ' ऐसा कह कर मुझसे अभयदान माँगता है, उसे मैं समस्त प्राणियों से निर्भय कर देता हूँ ॥ १२ ॥

राम क वचन को सुनकर सुग्रीव अत्यन्त प्रसन्न हो गये । और उन्होंने विभीषण को लाकर राम के सामने खड़ा कर दिया ॥ १३ ॥ विभीषण ने भी राम को साष्टाङ्ग प्रणाम कर परम भक्ति से युक्त हो हर्ष से गद्गद वाणी द्वारा हाथ जोड़कर परम शान्त, प्रसन्नवदनारविन्द, विशालनेत्र, धनुषबाणधारी श्यामसुन्दर लक्ष्मण जो सहित भगवान् राम की स्तुति आरम्भ कर दी ॥ १४-१६ ॥

विभीषण उवाच

नमस्ते राम राजेन्द्र ! नमः सीतामनोरम ! ।
नमस्ते चण्डकोदण्ड ! नमस्ते भक्तवत्सल ! ॥ १७ ॥
नमोऽनन्ताय शान्ताय रामायाऽमिततेजसे ।
सुग्रीवमित्राय च ते रघूणां पतये नमः ॥ १८ ॥
जगदुत्पत्तिनाशानां कारणाय महात्मने ।
त्रैलोक्यगुरवेऽनादिगृहस्थाय नमो नमः ॥ १९ ॥
त्वमादिर्जगतां राम ! त्वमेव स्थितिकारणम् ।
त्वमन्ते निधनस्थानं स्वेच्छाचारस्त्वमेव हि ॥ २० ॥
चराऽचराणां भूतानां बहिरन्तश्च राघव ! ।
व्याप्य-व्यापकरूपेण भवान् भाति जगन्मयः ॥ २१ ॥
त्वन्मायया हृतज्ञाना नष्टात्मानो विचेतसः ।
गतागतं प्रपद्यन्ते पाप-पुण्यवशात् सदा ॥ २२ ॥
तावत् सत्यं जगद्भाति शुक्तिकारजतं यथा ।
यावन्न ज्ञायते ज्ञानं चेतसानन्यगामिना ॥ २३ ॥

---

विभीषण ने कहा—राजराजेश्वर राम तुम्हें नमस्कार है, सीता के मन में रमण करने वाले प्रभो ! आपको नमस्कार है, प्रचण्ड धनुष धारण करने वाले, आपको नमस्कार है ! भक्तवत्सल प्रभो ! आपको नमस्कार है ॥ १७ ॥ अनन्त, शान्त स्वरूप, अमित तेजस्वी, सुग्रीव के परमसखा तथा रघुकुल के नायक आपको नमस्कार है ॥ १८ ॥ इस जगत् की उत्पत्ति तथा नाश के कारणभूत आप महात्मा को नमस्कार है, त्रैलोक्य-गुरु एवं अनादि गृहस्थ स्वरूप आपको नमस्कार है ॥ १९ ॥ हे राम ! आप इस जगत् के आदि हैं, आप ही इसके स्थिति के कारण हैं तथा इस जगत् के लय स्थान भी आप हो हैं। एवं आप अपनी इच्छानुसार रमण करने वाले हैं ॥ २० ॥ हे राघव ! आप चराचर प्राणियों के भीतर तथा बाहर व्याप्य-व्यापक रूप से संसार रूप से ही भासित हो रहे हैं ॥ २१ ॥ आपकी माया ने जिनका विवेक नष्ट कर दिया है, ऐसे अज्ञानी मूर्ख पुरुष अपने पाप एवं पुण्य के प्रभाव से इस जगत् में बारम्बार आते और जाते रहते हैं ॥ २२ ॥ जब तक पुरुष एकाग्रचित्त से आपके ज्ञान स्वरूप

त्वदज्ञानात् सदा युक्ताः पुत्र-दार-गृहादिषु ।
रमन्ते विषयान् सर्वांनन्ते दुःखप्रदान् विभो ! ॥ २४ ॥
त्वमिन्द्रोऽग्निर्यमो रक्षो वरुणश्च तथाऽनिलः ।
कुबेरश्च तथा रुद्रस्त्वमेव पुरुषोत्तम ! ॥ २५ ॥
त्वमणोरप्यणीयांश्च स्थूलात् स्थूलतरः प्रभो ! ।
त्वं पिता सर्वलोकानां माता धाता त्वमेव हि ॥ २६ ॥
आदिमध्यान्तरहितः परिपूर्णोऽच्युतोऽव्ययः ।
त्वं पाणिपादरहितश्चक्षुः श्रोत्रविवर्जितः ॥ २७ ॥
श्रोता द्रष्टा ग्रहीता च जवनस्त्वं खरान्तक ! ।
कोशेभ्यो व्यतिरिक्तस्त्वं निर्गुणो निरुपाश्रयः ॥ २८ ॥
निर्विकल्पो निर्विकारो निराकारो निरीश्वरः ।
षड्भावरहितोऽनादिः पुरुषः प्रकृतेः परः ॥ २९ ॥

---

को नहीं जानता तब तक उसे यह संसार, शुक्ति में रजत भ्रम के समान, सत्य प्रतीत होता है ॥ २३ ॥ हे प्रभो ! आपको न जानने के कारण ही लोग पुत्र, स्त्री एवं गृहादि की आसक्ति में फँसकर परिणाम में दुःखदायी विषयों को ही सुख मानते हैं ॥ २४ ॥

हे पुरुषोत्तम ! तुम्हीं इन्द्र, अग्नि, यम, निर्ऋति, वरुण, अग्नि, कुबेर तथा रुद्र स्वरूप हो ॥२५॥ हे प्रभो ! आप अणु से भी अणुतम हैं तथा महान् से भी महत्तर हैं। आप ही समस्त जगत् के माता, पिता तथा धाता ( पोषण करने वाले ) हैं ॥२६॥ आप आदि, मध्य एवं अन्त से रहित हैं, परितः पूर्ण हैं, अच्युत एवं अव्यय हैं। आप पाणि-पाद-चक्षु तथा श्रोत्र से रहित हैं ॥२७॥ किन्तु हे खरान्तक ! आप सब कुछ देखने वाले, सब कुछ सुनने वाले तथा सब कुछ ग्रहण करने वाले एवं सब-कुछ जानने वाले हैं, आप अन्नमय, प्राणमय, मनोमय, विज्ञानमय एवं आनन्दमय कोशों से रहित निर्गुण एवं निराश्रय हैं ॥ २८ ॥ आप निर्विकल्प, निर्विकार, निराकार तथा निरीश्वर हैं, आप उत्पत्ति, स्थित्यादि, छह भावों से रहित हैं तथा

**मायया गृह्यमाणस्त्वं मनुष्य इव भाव्यसे ।**
**ज्ञात्वा त्वां निर्गुणमजं वैष्णवा मोक्षगामिनः ॥ ३० ॥**

**अहं त्वत्पादसद्भक्तिनिःश्रेणीं प्राप्य राघव ! ।**
**इच्छामि ज्ञानयोगाख्यं सौधमारोढुमीश्वर ! ॥ ३१ ॥**

**नमः सीतापते ! राम नमः कारुणिकोत्तम ! ।**
**रावणारे ! नमस्तुभ्यं त्राहि मां भवसागरात् ॥ ३२ ॥**

**ततः प्रसन्नः प्रोवाच श्रीरामो भक्तवत्सलः ।**
**वरं वृणीष्व भद्रं ते वाञ्छितं वरदोऽस्म्यहम् ॥ ३३ ॥**

विभीषण उवाच

**धन्योऽस्मि कृतकृत्योऽस्मि कृतकार्योऽस्मि राघव ! ।**
**त्वत्पाददर्शनादेव विमुक्तोऽस्मि न संशयः ॥ ३४ ॥**

**नास्ति मत्सदृशो धन्यो नास्ति मत्सदृशः शुचिः ।**
**नास्ति मत्सदृशो लोके राम ! त्वन्मूर्तिदर्शनात् ॥ ३५ ॥**

---

प्रकृति से परे अनादि पुरुष हैं ॥ २९ ॥ आप माया के वशीभूत होने के कारण मनुष्य-जैसा प्रतीत होते हैं। वैष्णव लोग आपको निर्गुण तथा अजन्मा समझकर मुक्त हो जाते हैं ॥ ३० ॥

हे राघव ! हे प्रभो ! मैं आपके चरण-कमलों की भक्ति रूपी सीढ़ी प्राप्त कर ज्ञान योग रूपी महाप्रासाद के ऊपर चढ़ना चाहता हूँ ॥ ३१ ॥ हे सीतापते राम ! आपको नमस्कार है, हे कारुणिकोत्तम ! आपको नमस्कार है, हे रावणारे ! आपको नमस्कार है। आप इस संसार-सागर से मेरी रक्षा करें ॥ ३२ ॥

विभीषण के द्वारा की गयी इस प्रकार स्तुति सुनकर भक्तवत्सल राम प्रसन्न होकर बोले—विभीषण ! तुम्हारा कल्याण हो। मैं तुम्हें वर देना चाहता हूँ। अतः तुम्हारी जो इच्छा हो वह वर मुझसे माँग लो ॥३३॥ तब विभीषण ने कहा—हे राघव ! मैं आपके चरणों का दर्शन पाकर धन्य एवं कृतकृत्य हो गया। मेरा सब काम पूर्ण हो गया। अब मैं निःसन्देह मुक्त हो जाऊँगा ॥३४॥ हे राम ! आज मेरे समान न तो कोई धन्य है और न

कर्मबन्धविनाशाय त्वज्ज्ञानं भक्तिलक्षणम् ।
त्वद्ध्यानं परमार्थं च देहि मे रघुनन्दन ! ॥ ३६ ॥

न याचे राम राजेन्द्र ! सुखं विषयसम्भवम् ।
त्वत्पादकमले सक्ता भक्तिरेव सदाऽस्तु मे ॥ ३७ ॥

ओमित्युक्त्वा पुनः प्रीतो रामः प्रोवाच राक्षसम् ।
शृणु वक्ष्यामि ते भद्र ! रहस्यं मम निश्चितम् ॥ ३८ ॥

मद्भक्तानां प्रशान्तानां योगिनां वीतरागिणाम् ।
हृदये सीतया नित्यं वसाम्यत्र न संशयः ॥ ३९ ॥

तस्मात्त्वं सर्वदा शान्तः सर्वकल्मषवर्जितः ।
मां ध्यात्वा मोक्ष्यसे नित्यं घोर-संसार-सागरात् ॥ ४० ॥

स्तोत्रमेतत् पठेद्यस्तु लिखेद्यः शृणुयादपि ।
मत्प्रीतये ममाऽभीष्टं सारूप्यं समवाप्नुयात् ॥ ४१ ॥

---

तो कोई पवित्र ही है। और मेरी समानता करने वाला भी कोई नहीं है। क्योंकि, मैंने आपका दर्शन प्राप्त कर लिया ॥ ३५ ॥ हे रघुनन्दन ! अब आप मुझे कर्मरूपी ग्रन्थि को नष्ट करने के लिये भक्ति से प्राप्त होने वाला ज्ञान तथा परमार्थ का साक्षात् कराने वाला अपना ध्यान दीजिए ॥ ३६ ॥ हे राजराजेश्वर ! अब मैं आपसे विषयजन्य सुख नहीं माँगता, किन्तु आपके चरण-कमलों में निरन्तर निवास करने वाली भक्ति ही चाहता हूँ ॥ ३७ ॥

तब रामचन्द्र जी ने प्रसन्न होकर 'तथास्तु' कहा। पुनः विभीषण से वे इस प्रकार कहने लगे—हे भद्र ! सुनो, मैं अपना निश्चित रहस्य तुमसे कहता हूँ ॥ ३८ ॥ मैं सीता के सहित, प्रशान्त स्वभाव, योगनिष्ठ एवं विरक्त अपने भक्तों के हृदय में निवास करता हूँ। इसमें सन्देह नहीं ॥ ३९ ॥ इसलिए तुम सर्वदा शान्त एवं निष्पाप होकर मेरा ध्यान करो। ऐसा करने से घोर संसार-सागर से पार हो जाओगे ॥ ४० ॥ जो लोग मुझे प्रसन्न करने के लिए तुम्हारे द्वारा किये गये इस स्तोत्र का पाठ करेंगे, लिखेंगे अथवा श्रवण करेंगे वे मेरा अभीष्ट सारूप्य पद प्राप्त करेंगे ॥४१॥

इत्युक्त्वा लक्ष्मणं प्राह श्रीरामो भक्तभक्तिमान् ।
पश्यत्विदानीमेवैष मम सन्दर्शने फलम् ॥ ४२ ॥
लङ्काराज्येऽभिषेक्ष्यामि जलमानय सागरात् ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ ४३ ॥
यावन्मम कथा लोके तावद्राज्यं करोत्वसौ ।
इत्युक्त्वा लक्ष्मणेनाम्बु ह्यानाय्य कलशेन तम् ॥ ४४ ॥
लङ्काराज्याधिपत्यार्थमभिषेकं रमापतिः ।
कारयामास सचिवैर्लक्ष्मणेन विशेषतः ॥ ४५ ॥
साधु साध्विति ते सर्वे वानरास्तुष्टुवुर्भृशम् ।
सुग्रीवोऽपि परिष्वज्य विभीषणमथाब्रवीत् ॥ ४६ ॥
विभीषण ! वयं सर्वे रामस्य परमात्मनः ।
किङ्करास्तत्र मुख्यस्त्वं भक्त्या रामपरिग्रहात् ।
रावणस्य विनाशे त्वं साहाय्यं कर्तुमर्हसि ॥ ४७ ॥

---

भक्तों को भक्ति करने वाले श्री राम ने विभीषण से ऐसा कहा। तदनन्तर वे लक्ष्मण जी से बोले–हे लक्ष्मण ! यह अभी मेरे दर्शन का फल प्राप्त करे ॥ ४२ ॥ तुम समुद्र से जल लाओ, मैं अभी लङ्का के राज्य पर इसका अभिषेक करूँगा । जब तक सूर्य, चन्द्रमा एवं पृथ्वी की स्थिति है ॥ ४३ ॥ और जब तक लोक में मेरी कथा रहेगी, तब तक यह लङ्का का राज्य करेगा । ऐसा कहकर श्री राम ने लक्ष्मण द्वारा समुद्र का जल कलश में मँगवाया ॥ ४४ ॥ फिर रमापति राम ने मन्त्रियों एवं विशेष कर लक्ष्मण जी के साथ लङ्का के राज्य का स्वामी बनाने के लिये उसका अभिषेक किया ॥ ४५ ॥

इधर सभी वानर भी प्रसन्न मन से 'धन्य हैं धन्य हैं' ऐसा कहकर श्रीरामचन्द्र जी की स्तुति करने लगे । तथा सुग्रीव ने विभीषण को गले लगा कर कहा–॥४६॥ हे विभीषण ! ऐसे तो हम सभी परमात्मा राम के दास होने से समान हैं किन्तु तुम सबसे श्रेष्ठ हो, क्योंकि तुमने केवल भक्ति से राम की शरण पकड़ी है । अच्छा, अब तुम्हें रावण के वध में हम लोगों की सहायता करनी चाहिए ॥ ४७ ॥

विभीषण उवाच

अहं क्रियान् सहायत्वे रामस्य परमात्मनः ।
किं तु दास्यं करिष्येऽहं भक्त्या शक्त्या ह्यमायया ॥ ४८ ॥
दशग्रीवेण सन्दिष्टः शुको नाम महासुरः ।
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ॥ ४९ ॥
त्वामाह रावणो राजा भ्रातरं राक्षसाधिप ! ।
महाकुलप्रसूतस्त्वं राजासि वनचारिणाम् ॥ ५० ॥
मम भ्रातृसमानस्त्वं तव नास्त्यर्थविप्लवः ।
अहं यदि हरं भार्यां राजपुत्रस्य किं तव ॥ ५१ ॥
किष्किन्धां याहि हरिभिर्लङ्का शक्या न दैवतैः ।
प्राप्तुं किं मानवैरल्पसत्त्वैर्वानरयूथपैः ॥ ५२ ॥
तं प्रापयन्तं वचनं तूर्णमुत्प्लुत्य वानराः ।
प्रापद्यन्त तदा क्षिप्रं निहन्तुं दृढमुष्टिभिः ॥ ५३ ॥

---

तब विभीषण ने कहा—सर्व-समर्थ परमात्मा राम की मैं कौन सी सहायता करने योग्य हूँ किन्तु निष्कपट रूप से भक्ति और शक्ति पूर्वक इनकी सेवा मैं अवश्य करूँगा ॥ ४८ ॥ इसी समय रावण का भेजा हुआ शुक नामक राक्षस आकाश में स्थित होकर सुग्रीव से रावण का सन्देश इस प्रकार कहने लगा——॥ ४९ ॥

हे सुग्रीव ! राक्षसराज रावण ने तुम्हें अपना भाई समझ कर कहा है कि तुम उत्तम कुल में उत्पन्न हुए हो और वानरों के राजा हो ॥ ५० ॥ तुम मेरे भाई के समान हो, मैंने तुम्हारे किसी स्वार्थ की हानि भी नहीं पहुँचायी है। यदि मैंने किसी राजपुत्र की भार्या का अपहरण कर लिया है, तो तुम्हारा उससे क्या नुकसान है ॥ ५१ ॥ अतः अच्छा यही होगा कि तुम वानरों के साथ किष्किन्धा लौट जाओ। इस लङ्का को देवता भी जीत नहीं सकते। फिर अल्प शक्ति-सम्पन्न मनुष्य और वानर यूथपों की बात ही क्या है ॥ ५२ ॥

शुक इस प्रकार सन्देश सुना ही रहा था कि वानरों ने अपने सुदृढ़ मुक्कों से उसे मारने के लिये आकाश में उछल कर उसे पकड़ लिया ॥ ५३ ॥

वानरैर्हन्यमानस्तु शुको राममथाब्रवीत् ।
न दूतान् घ्नन्ति राजेन्द्र ! वानरान् वारय प्रभो ! ॥ ५४ ॥
रामः श्रुत्वा तदा वाक्यं शुकस्य परिदेवितम् ।
मा वधिष्टेति रामस्तान् वारयामास वानरान् ॥ ५५ ॥
पुनरम्बरमासाद्य शुकः सुग्रीवमब्रवीत् ।
ब्रूहि राजन् ! दशग्रीवं किं वक्ष्यामि व्रजाम्यहम् ॥ ५६ ॥

विभीषण उवाच

यथा वाली मम भ्राता तथा त्वं राक्षसाधम !
हन्तव्यस्त्वं मया यत्नात् सपुत्रबलवाहनः ॥ ५७ ॥
ब्रूहि मे रामचन्द्रस्य भार्यां हृत्वा क्व यास्यसि ? ।
ततो रामाज्ञया धृत्वा शुकं बद्ध्वाऽन्वरक्षयत् ॥ ५८ ॥
शार्दूलोऽपि ततः पूर्वं दृष्ट्वा कपिबलं महत् ।
यथावत् कथयामास रावणाय स राक्षसः ॥ ५९ ॥

---

वानरों के द्वारा इस प्रकार मारे जाने पर शुक रामचन्द्र जी की दुहाई देता हुआ बोला—हे राजराजेश्वर ! विद्वान् लोग दूतों को नहीं मारा करते । अतः हे प्रभो ! आप इन वानरों को रोकिए ॥ ५४ ॥

शुक के द्वारा करुणापूर्वक कहे गये वचन को सुनकर श्री रामचन्द्र जी ने 'इसे मत मारो' ऐसा कहकर वानरों को रोक दिया ॥ ५५ ॥ फिर शुक आकाश में उड़कर सुग्रीव से बोला—हे राजन् ! मैं अब जा रहा हूँ। तुम बताओ कि मैं रावण को क्या उत्तर दूँगा॥ ५६ ॥

तब सुग्रीव ने कहा—राक्षसराज रावण से जाकर कहना कि जिस प्रकार मेरा भाई बाली शत्रु होने के कारण मारा गया, उसी प्रकार तुम भी शत्रु होने के कारण पुत्र, सेना एवं वाहन सहित मेरे प्रयत्न से मारे जाओगे ॥ ५७ ॥ और उससे यह भी कहना कि तुम रामचन्द्र जी की भार्या का हरण कर कहाँ भाग सकोगे । पुनः राम की आज्ञा से उसे बाँध-कर वानरों की रक्षा में छोड़ दिया ॥ ५८ ॥ इससे पहले शार्दूल नामक राक्षस ने वानरों की बहुत बड़ी सेना देखकर रावण से उसका यथावत्

दीर्घचिन्तापरो भूत्वा निःश्वसन्नास मन्दिरे ।
ततः समुद्रमावेक्ष्य रामो रक्तान्तलोचनः ।। ६० ।।
पश्य लक्ष्मण ! दुष्टोऽसौ वारिधिर्मामुपागतम् ।
नाभिनन्दति दुष्टात्मा दर्शनार्थं ममानघ ! ।। ६१ ।।
जानाति मानुषोऽयं मे किं करिष्यति वानरैः ।
अद्य पश्य महाबाहो ! शोषयिष्यामि वारिधिम् ।। ६२ ।।
पादेनैव गमिष्यन्ति वानरा विगतज्वराः ।
इत्युक्त्वा क्रोधताम्राक्ष आरोपितधनुर्धरः ।। ६३ ।।
तूणीराद् बाणमादाय कालाग्निसदृशप्रभम् ।
सन्धाय चापमाकृष्य रामो वाक्यमथाब्रवीत् ।। ६४ ।।
पश्यन्तु सर्वभूतानि रामस्य शरविक्रमम् ।
इदानीं भस्मसात् कुर्यां समुद्रं सरितां पतिम् ।। ६५ ।।

---

बर्णन कर दिया था ।। ५९ ।। जिसे सुनकर रावण चिन्ता में निमग्न हो गया और अपने महल में दीर्घ निःश्वास छोड़ता हुआ चुपचाप नीचे मुख किये बैठ गया । इसी समय भगवान् राम ने भी समुद्र की ओर देखकर क्रोध से आँखें लाल-लाल कर कहा—।। ६० ।।

हे लक्ष्मण ! देखो, यह समुद्र कितना दुष्ट है कि मैं इसके तट पर आया हुआ हूँ । किन्तु यह दर्शन मात्र से भी मेरा सत्कार नहीं करना चाहता ।। ६१ ।। यह समझ रहा है कि राम एक मनुष्य ही तो हैं, यह इन वानरों के साथ मिलकर भी हमारा क्या कर सकता है । अतः हे महाबाहो ! तुम देखो, मैं इसे अभी सुखा देता हूँ ।। ६२ ।। अब वानर निश्चिन्त होकर पैदल ही इसके पार हो जायेंगे । ऐसा कहकर उन्होंने क्रोध से आँखें लाल-लालकर अपना धनुष चढ़ाया । और तरकस से कालाग्नि के समान जलते हुए बाण को निकालकर उसे धनुष पर रख कर खींचते हुए कहा—।। ६३—६४ ।। समस्त प्राणी राम के बाण का पराक्रम देखें । मैं इस नदीपति समुद्र को अभी भस्म किये देता हूँ ।। ६५ ।।

एवं ब्रुवति रामे तु सशैलवनकानना ।
चचाल वसुधा द्यौश्च दिशश्च तमसावृताः ॥ ६६ ॥
चुक्षुभे सागरो वेलां भयाद्योजनमत्यगात् ।
तिमि-नक्र-झषा मीनाः प्रतप्ताः परितत्रसुः ॥ ६७ ॥
एतस्मिन्नन्तरे साक्षात् सागरो दिव्यरूपधृक् ।
दिव्याभरणसम्पन्नः स्वभासा भासयन् दिशः ॥ ६८ ॥
स्वान्तःस्थदिव्यरत्नानि कराभ्यां परिगृह्य सः ।
पादयोः पुरतः क्षिप्त्वा रामस्योपायनं बहु ॥ ६९ ॥
दण्डवत् प्रणिपत्याह रामं रक्तान्तलोचनम् ।
त्राहि त्राहि जगन्नाथ राम ! त्रैलोक्यरक्षक ! ॥७०॥
जडोऽहं राम ! ते सृष्टः सृजता निखिलं जगत् ।
स्वभावमन्यथा कर्तुं कः शक्तो देवनिर्मितम् ॥ ७१ ॥
स्थूलानि पञ्चभूतानि जडान्येव स्वभावतः ।
सृष्टानि भवतैतानि त्वदाज्ञां लङ्घयन्ति न ॥ ७२ ॥

---

राम के ऐसा कहते ही पर्वत और वनों समेत सारी पृथ्वी हिलने लगी। एवं आकाश तथा दिशाओं में अन्धकार छा गया ॥ ६६ ॥ समुद्र क्षुब्ध हो गया, वह भय से संत्रस्त होकर अपने तट से एक योजन आगे बढ़ आया। और उसमें रहने वाले अनेक जल-जन्तु, तिमि, नक्र, मकर एवं मछलियाँ सन्तप्त होकर भयभीत हो गयीं ॥ ६७ ॥

उसी समय समुद्र दिव्य आभूषण पहने हुए दिव्यमूर्ति से अपने भीतर के रहने वाले दिव्य रत्नों को दोनों हाथों में लिये हुए श्री राम के समीप उपस्थित हुआ। और उनके चरणों के सामने अनेक प्रकार की भेंट सामग्री रखकर दण्डवत् प्रणाम कर क्रोध से लाल नेत्र किये हुए श्री रामचन्द्र जी से बोला—हे त्रैलोक्यरक्षक जगन्नाथ राम ! हमारी रक्षा करो ॥६८–७०॥ हे प्रभो ! आपने सारे ब्रह्माण्ड की रचना करते समय हमको जड़ ही बनाया था। फिर देव-निर्मित स्वभाव को कोई किस प्रकार बदल सकता है ॥ ७१ ॥ हे प्रभो ! आपने पञ्चभूतों को स्वभाव से जड़

तामसादहमो राम! भूतानि प्रभवन्ति हि।
कारणानुगमशेषां जडत्वं तामसं स्वतः ॥ ७३ ॥
निर्गुणस्त्वं निराकारो यदा मायागुणान् प्रभो!।
लीलयाऽङ्गीकरोषि त्वं तदा वैराजनामवान् ॥ ७४ ॥
गणात्मनो विराजश्च सत्त्वाद् देवा बभूविरे।
रजोगुणात् प्रजेशाद्या मन्योर्भूतपतिस्तव ॥ ७५ ॥
त्वामहं मायया छन्नं लीलया मानुषाकृतिम् ॥ ७६ ॥
जडबुद्धिर्जडो मूर्खः कथं जानामि निर्गुणम्।
दण्ड एव हि मूर्खाणां सन्मार्गप्रापकः प्रभो! ॥ ७७ ॥
भूतानाममरश्रेष्ठ! पशूनां लगुडो यथा।
शरणं ते व्रजामीश! शरण्यं भक्तवत्सल!।
अभयं देहि मे राम! लङ्कामार्गं ददामि ते ॥ ७८ ॥

---

ही बनाया है। इसीलिए वे लोग आप की आज्ञा का उल्लंघन नहीं कर सकते ॥ ७२ ॥ हे राम! ये पञ्च महाभूत, तामस, अहङ्कार से उत्पन्न हुए हैं, अतः कारणगत गुणधर्म कार्य में आने के कारण इन भूतों में भी तमो रूप जडत्व स्वयं सिद्ध है ॥ ७३ ॥ हे प्रभो! जब निर्गुण एवं निराकार स्वरूप आप माया के गुणों को अङ्गीकार करते हैं, तो आप 'वैराज' नाम से कहे जाते हैं ॥ ७४ ॥ फिर उस गुणमय विराट् के सात्त्विक अंश से देवताओं की उत्पत्ति होती है। और उसके रजोगुण से प्रजापतिगुणों की तथा तामसांश से रुद्रकी उत्पत्ति होती है ॥ ७५ ॥

हे नाथ! लीलावश माया से आच्छन्न, मनुष्य रूप धारण किये हुए आप निर्गुण परमात्मा को मैं जड़बुद्धि जड़मूर्ख किस प्रकार जान सकता हूँ। हे प्रभो! मूर्ख जीवों को तो दण्ड ही उत्तम मार्ग पर लाने वाला होता है ॥ ७६-७७ ॥ जिस प्रकार पशुओं को लाठी ठीक-ठीक मार्ग पर चलाती है। हे भक्तवत्सल, हे ईश, हे राम! मैं आप की शरण हूँ। मुझे आप अभय दान दीजिए, मैं आपको लङ्का जाने के लिए मार्ग दूँगा ॥७८॥

श्रीराम उवाच

अमोघोऽयं महाबाणः कस्मिन् देशे निपात्यताम् ।
लक्ष्यं दर्शय मे शीघ्रं बाणस्यामोघपातिनः ॥ ७९ ॥
रामस्य वचनं श्रुत्वा करे दृष्ट्वा महाशरम् ।
महोदधिर्महातेजा राघवं वाक्यमब्रवीत् ॥ ८० ॥
रामोत्तरप्रदेशे तु द्रुमकुल्य इति श्रुतः ।
प्रदेशस्तत्र बहवः पापात्मानो दिवानिशम् ॥ ८१ ॥
बाधन्ते मां रघुश्रेष्ठ ! तत्र ते पात्यतां शरः ।
रामेण सृष्टो बाणस्तु क्षणादाभीरमण्डलम् ॥ ८२ ॥
हत्वा पुनः समागत्य तूणीरे पूर्ववत् स्थितः ।
ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः ॥ ८३ ॥
नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः ।
सुतो धीमान् समर्थोऽस्मिन् कार्ये लब्धवरो हरिः ॥ ८४ ॥

---

तब श्री राम ने कहा—मेरा यह बाण कभी व्यर्थ नहीं जाता। इस अमोघ बाण को छोड़ने के लिए मुझे शीघ्र कोई लक्ष्य बताओ, जहाँ इसे चलावें ॥ ७९ ॥

राम की बात सुनकर एवं उनके हाथ में उस महाबाण को देखकर महा तेजस्वी समुद्र रघुनाथ जो से बोला—॥ ८० ॥ हे राम ! मेरे उत्तर तट पर 'द्रुमकुल्य' नामक एक स्थान है। उस प्रदेश में बहुत से पापी निवास करते हैं, जो मुझे दिन-रात पीडित करते रहते हैं। हे रघुश्रेष्ठ ! आप अपना बाण उनके लिए उधर ही छोड़िए। इस प्रकार राम के द्वारा छोड़ा हुआ वह बाण क्षण भर में उन आभीर मण्डलों का वध कर पुनः तरकस में पूर्ववत् लौट आया। तब समुद्र ने बड़े विनय से श्री राम से कहा—॥ ८१–८३ ॥

हे नाथ ! विश्वकर्मा का महाबुद्धिमान् पुत्र नल मेरे इस जल पर पुलका निर्माण करें। वह वानर वर के प्रभाव से इस कार्य को करने में

विभीषणोऽपि तच्छ्रुत्वा जगाम सहमारुतिः ।
राक्षसीभिः सुवृद्धाभिः स्नापयित्वा तु मैथिलीम् ॥६९॥
सर्वाभरण-सम्पन्नामारोप्य शिबिकोत्तमे ।
याष्टीकैर्बहुभिर्गुप्तां कञ्चुकोष्णीषिभिः शुभाम् ॥७०॥
तां द्रष्टुमागताः सर्वे वानरा जनकात्मजाम् ।
तान् वारयन्तो बहवः सर्वतो वेत्रपाणयः ॥७१॥
कोलाहलं प्रकुर्वन्तो रामपार्श्वमुपाययुः ।
दृष्ट्वा तां शिबिकारूढां दूरादथ रघूत्तमः ॥७२॥
विभीषण ! किमर्थं ते वानरान् वारयन्ति हि ।
पश्यन्तु वानराः सर्वे मैथिलीं मातरं यथा ॥७३॥
पादचारेण साऽऽयातु जानकी मम सन्निधिम् ।
श्रुत्वा तद्रामवचनं शिबिकादवरुह्य सा ॥७४॥
पादचारेण शनकैरागता रामसन्निधिम् ।
रामोऽपि दृष्ट्वा तां मायासीतां कार्यार्थनिर्मिताम् ॥७५॥

---

यह सुन कर विभीषण हनुमान् जी को साथ लेकर शीघ्रता से लंका गये । और बड़ी बूढ़ी राक्षसियों के द्वारा सीता जी को स्नान करवा कर ॥६९॥ उन्हे सभी प्रकार के आभूषणों से सुशोभित हो जाने पर एक सुन्दर पालकी पर बैठाया । फिर उन्हें जामा तथा पगड़ी पहने हुए बहुत से छड़ीदारों से सुरक्षित कर श्रीराम के पास ले चले ॥ ७० ॥ उस समय कल्याणमयी जानकी को देखने के लिए सभी वानर दौड़कर वहाँ आये । कञ्चुकी लोग हाथ में बेंत लेकर उन वानरों को चारों ओर दूर से रोकते हुए ॥ ७१ ॥ और कोलाहल करते हुए श्रीरामचन्द्रजी के पास जानकी को ले आये । तब शिविका के ऊपर बैठकर आती हुई जानकी को दूर से देखकर श्रीरामचन्द्र जी ने कहा—॥ ७२ ॥ विभीषण ! ये छड़ीदार वानरों को क्यों रोकते हैं । सभी वानर माता के समान जानकी का दर्शन करें ॥ ७३ ॥ इसलिए जानकी जी मेरे पास पैदल चल कर आवें । राम के इस बात को सुनकर जानकी जी पालकी से उतर पड़ीं ॥ ७४ ॥ और धीरे-धीरे पैदल चलकर राम के पास पहुँच गयीं ।

अवाच्यवादान् बहुशः प्राह तां रघुनन्दनः ।
अमृष्यमाणा सा सीता वचनं राघवोदितम् ॥७६॥
लक्ष्मणं प्राह मे शीघ्रं प्रज्वालय हुताशनम् ।
विश्वासार्थं हि रामस्य लोकानां प्रत्ययाय च ॥७७॥
राघवस्य मतं ज्ञात्वा लक्ष्मणोऽपि तदैव हि ।
महाकाष्ठचयं कृत्वा ज्वालयित्वा हुताशनम् ॥७८॥
रामपार्श्वमुपागम्य तस्थौ तूष्णीमरिन्दमः ।
ततः सीता परिक्रम्य राघवं भक्तिसंयुता ॥७९॥
पश्यतां सर्वलोकानां देवराक्षसयोषिताम् ।
प्रणम्य देवताभ्यश्च ब्राह्मणेभ्यश्च मैथिली ॥८०॥
बद्धाञ्जलिपुटा चेदमुवाचाऽग्निसमीपगा ।
यथा मे हृदयं नित्यं नाऽपसर्पति राघवात् ॥८१॥
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ।
एवमुक्त्वा तदा सीता परिक्रम्य हुताशनम् ॥८२॥

---

राम ने भी कार्य के लिए बनायी गयी सीता को देखकर ॥ ७५ ॥ उन्हें बहुत से सन्देह युक्त अवाच्य वचन कहा। तब सीता रघुनाथ जी के द्वारा कहे गये उस अवाच्य वचन को सहन न कर सकीं ॥ ७६ ॥ उन्होंने लक्ष्मण से कहा—'हे लक्ष्मण ! तुम शीघ्र ही राम के विश्वास के लिए तथा लोगों के निश्चय के लिए अग्नि प्रज्वलित करो' ॥ ७७ ॥ श्रीरामचन्द्र जी की भी सम्मति समझ कर शत्रुदमन लक्ष्मण ने उसी समय बहुत-सा काष्ठ-समूह एकत्रित कर उसको अग्नि से प्रज्वलित कर ॥७८॥ मौन हो राम जी के पास आकर खड़े हो गये। तब सीता जी ने भक्ति-युक्त होकर श्रीराम की परिक्रमा की ॥ ७९ ॥ पुनः मिथिलेश कुमारी सीता ने सब लोगों के एवं देव-स्त्रियों तथा राक्षस-स्त्रियों के देखते-देखते देवताओं और ब्राह्मणों को नमस्कार किया ॥ ८० ॥ और अग्नि के पास जा हाथ जोड़ कर कहने लगीं। 'यदि मेरा हृदय रामचन्द्र जी को छोड़कर कभी अन्यत्र न जाता हो ॥ ८१ ॥ तो हे समस्त लोकों के साक्षी

**विवेश ज्वलनं दीप्तं निर्भयेन हृदा सती ॥८३॥**
**दृष्ट्वा ततो भूतगणाः स-सिद्धाः**
**सीतां महावह्निगता भृशार्ताः ।**
**परस्परं प्राहुरहो स सीतां**
**रामः श्रियं स्वां कथमत्यजज्ज्ञः ॥८४॥**

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे
युद्धकाण्डे द्वादशः सर्गः ॥ १२ ॥



## त्रयोदशः सर्गः

(देवताओंद्वारा श्रीराम-स्तुति, सीतासहित अग्निदेवका प्रादुर्भाव
और श्रीराम का अयोध्या के लिए प्रस्थान)

श्रीमहादेव उवाच

**ततः शक्रः सहस्राक्षो यमश्च वरुणस्तथा ।**
**कुबेरश्च महातेजाः पिनाकी वृषवाहनः ॥१॥**

---

अग्निदेव ! आप मेरी सब ओर से सब प्रकार रक्षा करें।' ऐसा कहकर सीता अग्नि की परिक्रमा कर ॥ ८२ ॥ हृदय से निर्भय हो, अग्नि में प्रविष्ट हो गयीं ॥ ८३ ॥ उस समय सिद्धों के सहित समस्त भूत गण सीता को प्रचण्ड अग्नि में प्रविष्ट हुई देख अत्यन्त व्याकुल हो उठे। और परस्पर कहने लगे—'अहो ! सब कुछ जानते हुए भी श्रीरामचन्द्र जी अपनी लक्ष्मी सीता को कैसे छोड़ दिया' ॥ ८४ ॥

इस प्रकार 'रामप्रिया' हिन्दीव्याख्या विभूषित अध्यात्म-रामायण के
उमा-महेश्वर संवाद में युद्धकाण्ड का बारहवाँ सर्ग समाप्त ॥ १२ ॥



महादेव जी ने कहा—हे पार्वति ! इसी समय सहस्राक्ष इन्द्र, यम, वरुण, कुबेर, महातेजस्वी वृषवाहन महादेव जी, सिद्ध और चारणों

ब्रह्मा ब्रह्मविदां श्रेष्ठो मुनिभिः सिद्ध-चारणैः ।
पितरो ऋषयः साध्या गन्धर्वाऽप्सरसोरगाः ॥२॥

एते चाऽन्ये विमानाग्र्यै राजग्मुर्यत्र राघवः ।
अब्रुवन परमात्मानं रामं प्राञ्जलयश्च ते ॥३॥

कर्ता त्वं सर्वलोकानां साक्षी विज्ञानविग्रहः ।
वसूनामष्टमोऽसि त्वं रुद्राणां शङ्करो भवान ॥४॥

आदिकर्ताऽसि लोकानां ब्रह्मा त्वं चतुराननः ।
अश्विनौ घ्राणभूतौ ते चक्षुषी चन्द्र-भास्करौ ॥५॥

लोकानामादिरन्तोऽसि नित्य एकः सदोदितः ।
सदा शुद्धः सदा बुद्धः सदा मुक्तोऽगुणोऽद्वयः ॥६॥

त्वन्मायासंवृतानां त्वं भासि मानुषविग्रहः ।
त्वन्नाम स्मरतां राम सदा भासि चिदात्मकः ॥७॥

---

सहित ब्रह्मवेत्ताओं में श्रेष्ठ ब्रह्मा जी, पितृगण, ऋषि, साध्य, गन्धर्व, अप्सराएँ एवं नागगण ये सब तथा अन्यान्य देवगण श्रेष्ठ विमानों पर चढ़कर जहाँ श्रीरामचन्द्रजी थे, वहाँ आये । और हाथ जोड़ कर परमात्मा श्रीराम से कहने लगे–॥ १–३ ॥

हे नाथ ! आप सभी लोकों के कर्त्ता एवं ज्ञानस्वरूप हैं, आप वसुओं में अष्टम वसु तथा रुद्रों में शङ्कर हैं ॥ ४ ॥ आप सभी लोकों के कर्त्ता चतुर्मुख ब्रह्मा हैं । अश्विनो कुमार आप की घ्राणेन्द्रिय तथा चन्द्रमा एवं सूर्य आप के दो नेत्र हैं ॥ ५ ॥ आप सभी लोकों के आदि ( उत्पत्ति-स्थान ) तथा अन्त ( प्रलयस्थान ) हैं, आप नित्य हैं, आप आविर्भाव, तिरोभाव से रहित एवं प्रकाश स्वरूप होने के कारण सदोदित हैं । आप नित्य शुद्ध, नित्य बुद्ध, नित्य मुक्त, गुण रहित एवं अद्वय हैं ॥ ६ ॥ आप अपनी माया से आच्छादित लोगों के लिए मनुष्य स्वरूप हैं किन्तु जो लोग आप के नाम का स्मरण करते हैं उनके लिए आप चैतन्य स्वरूप भासते हैं ॥ ७ ॥ हे नाथ ! रावण ने हम लोगों के तेज के साथ स्थान भी छीन लिया था । सो यह दुष्ट आज आप के हाथ से मारा गया ।

रावणेन हतं स्थानमस्माकं तेजसा सह ।
त्वयाऽद्य निहतो दुष्टः पुनः प्राप्तं पदं स्वकम् ॥८॥
एवं स्तुवत्सु देवेषु ब्रह्मा साक्षात् पितामहः ।
अब्रवीत प्रणतो भूत्वा रामं सत्यपथे स्थितम् ॥९॥

ब्रह्मोवाच

वन्दे देवं विष्णुमशेषस्थितिहेतुं
त्वामध्यात्मज्ञानिभिरन्तर्हृदि भाव्यम् ।
हेया-ऽहेय-द्वन्द्वविहीनं परमेकं
सत्तामात्रं सर्वहृदिस्थं दृशिरूपम् ॥१०॥
प्राणाऽपानौ निश्चय-बुद्ध्या हृदि रुद्ध्वा
छित्त्वा सर्वं संशयबन्धं विषयौघान् ।
पश्यन्तीशं यं गतमोहा यतयस्तं
वन्दे रामं रत्नकिरीटं रविभासम् ॥११॥

---

और हमें अपना स्थान पुनः प्राप्त हो गया ॥ ८ ॥ देवताओं के द्वारा इस प्रकार स्तुति कर लिये जाने पर साक्षात् पितामह ब्रह्मा ने अत्यन्त विनम्र होकर सत्यपथ में स्थित भगवान् श्रीराम से इस प्रकार कहने लगे ॥ ९ ॥

ब्रह्मा ने कहा—हे राम ! समस्त प्राणियों के पालन करने वाले, अध्यात्म ज्ञानियों के द्वारा हृदय-स्थल में ध्यान करने योग्य, त्याज्य एवं ग्राह्य रूप द्वन्द्व से विहीन, सबसे परे, अद्वितीय, सत्तामात्र एवं साक्षी स्वरूप से सबके अन्तःकरण में विराजमान आप विष्णु को, मैं नमस्कार करता हूँ ॥ १० ॥ विगत मोह संन्यासी गण निश्चय बुद्धि से प्राण और अपान को हृदय में रोक कर समस्त संशय रूप बन्धन एवं विषय-समूहों का छेदन कर जिन परमात्मा का ध्यान करते हैं। रत्न-किरीट धारण करने वाले उन देदीप्यमान सूर्य के समान भगवान् राम की मैं वन्दना करता हूँ ॥ ११ ॥

मायातीतं माधवमाद्यं जगदादिं
मानातीतं मोहविनाशं मुनिवन्द्यम् ।
योगिध्येयं योगविधानं परिपूर्णं
वन्दे रामं रञ्जितलोकं रमणीयम् ॥१२॥

भावा-ऽभाव-प्रत्ययहीनं भवमुख्यै-
र्योगासक्तैरर्चित-पादाम्बुजयुग्मम् ।
नित्यं शुद्धं बुद्धमनन्तं प्रणवाख्यं
वन्दे रामं वीरमशेषासुरदावम् ॥१३॥

त्वं मे नाथो नाथितकार्याखिलकारी
मानातीतो माधवरूपोऽखिलधारी ।
भक्त्या गम्यो भावितरूपो भवहारी
योगाभ्यासैर्भावितचेतः सहचारी ॥१४॥

---

जो मायातीत, लक्ष्मीपति, सबके आदि कारण, जगत्पिता, प्रत्यक्षादि सभी प्रमाणों से परे, मोह का नाश करने वाले, मुनिजनों से वन्दनीय, योगियों के ध्येय एवं योगशास्त्र के प्रवर्त्तक, सर्वत्र परिपूर्ण एवं संसार को आनन्द देने वाले, परम रमणीय राम को मैं प्रणाम करता हूँ ॥ १२ ॥

जो सत् और असत् रूप प्रतीति से रहित होने के कारण अनिर्वनीय एवं योग-परायण, सदाशिव आदि योगियों से जिनके चरण-कमल पूजित हैं एवं जो नित्य शुद्ध, नित्य बुद्ध, अनन्त हैं। जो सम्पूर्ण राक्षसों को दहन करने के लिए दावानल के समान हैं, प्रणव स्वरूप उन वीर राम को मैं प्रणाम करता हूँ ॥ १३ ॥

आप हमारे सम्पूर्ण प्रार्थित कार्यों को पूर्ण करने के कारण नाथ, देश-कालादि रूप अवधि से अपरिच्छिन्न नारायण स्वरूप, सम्पूर्ण विश्व को धारण करने वाले, भक्ति से प्राप्य, मनोहर रूप वाले, संसार से मुक्त करने वाले एवं योगाभ्यास से विशद्ध चित्त में विहार करने

त्वामाद्यन्तं लोकततीनां परमीशं
लोकानां नो लौकिकमानैरधिगम्यम् ।
भक्ति-श्रद्धाभाव-समेतैर्भजनीयं
वन्दे रामं सुन्दरमिन्दीवरनीलम् ॥१५॥

को वा ज्ञातुं त्वामतिमानं गतमानं
मायासक्तो माधवशक्तो मुनिमान्यम् ।
वृन्दारण्ये वन्दितवृन्दारकवृन्दं
वन्दे रामं भवमुखवन्द्यं सुखकन्दम् ॥१६॥

नानाशास्त्रैर्वेदकदम्बैः प्रतिपाद्यं
नित्यानन्दं निर्विषयज्ञानमनादिम् ।
मत्सेवार्थं मानुषभावं प्रतिपन्नं
वन्दे रामं मरकतवर्णं मथुरेशम् ॥१७॥

---

वाले हैं ॥ १४ ॥ इस समस्त लोक-परम्परा के आप आदि और अन्त हैं, लोकों के महेश्वर हैं, आप किसी लौकिक प्रमाणों के आधार पर अविज्ञेय हैं। तथा भक्ति एवं श्रद्धाभाव से सम्पन्न पुरुषों द्वारा जो भजनीय हैं, उन नीले कमल के समान परममनोहर रामचन्द्र जी को मैं प्रणाम करता हूँ ॥ १५ ॥ हे लक्ष्मीनाथ ! स्थूल रूप से अतिमानव तथा सूक्ष्म रूप से मान रहित, महर्षियों से पूज्य, आपको माया में आसक्त कौन प्राणी जानने में समर्थ हो सकता है। आप गोलोक के वृन्दावन में देवताओं द्वारा वन्दित हैं। अतः शिवादि देवताओं से वन्दनीय सुख के कन्दस्वरूप, आप राम की मैं वन्दना करता हूँ ॥ १६ ॥

अनेक शास्त्र एवं वेद जिनका प्रतिपादन करते हैं, जो नित्यानन्द स्वरूप, निर्विकल्प समाधि से जानने योग्य एवं अनादि हैं तथा जो मेरी सेवा के लिए मनुष्य रूप से अवतरित हुए हैं ऐसे मरकतमणि के सदृश कान्ति वाले, मथुरानाथ ( शत्रुघ्न द्वारा लवणासुर का वध करा वहाँ का राज्य शत्रुघ्न को दे दिया था, वाराह पुराण ) श्रीराम को मैं प्रणाम

श्रद्धायुक्तो यः पठतीमं स्तवमाद्यं
ब्राह्मं ब्रह्मज्ञानविधानं भुवि मर्त्यः।
रामं श्यामं कामितकामप्रदमीशं
ध्यात्वा ध्याता पातकजालैर्विगतः स्यात् ॥१८॥

श्रुत्वा स्तुतिं लोकगुरोर्विभावसुः
स्वाङ्के समादाय विदेहपुत्रिकाम्।
विभ्राजमानां विमलारुणद्युतिं
रक्ताम्बरां दिव्यविभूषणान्विताम् ॥१९॥

प्रोवाच साक्षी जगतां रघूत्तमं
प्रपन्नसर्वार्तिहरं हुताशनः।
गृहाण देवीं रघुनाथ! जानकीं
पुरा त्वया मय्यवरोपितां वने ॥२०॥

विधाय मायाजनकात्मजां हरे
दशानन-प्राण-विनाशनाय च।
हतो दशास्यः सह पुत्रबान्धवै-
र्निराकृतोऽनेन भरो भुवः प्रभो! ॥२१॥

---

करता हूँ ॥ १७ ॥ जो मनुष्य इच्छित कामनाओं को पूर्ण करने वाले, श्याममूर्त्ति परमेश्वर का ध्यान करते हुए ब्रह्मा जी के द्वारा किये गये आद्य ब्रह्मज्ञान विषयक इस स्तोत्र का पाठ करेगा। वह ध्यानशील पुरुष समस्त पापजालों से मुक्त हो जायेगा ॥ १८ ॥

लोकपितामह ब्रह्मदेव की स्तुति सुनकर लोकसाक्षी अग्निदेव विशुद्ध अरुणवर्ण की कान्ति से सुशोभित, रक्त वस्त्र एवं दिव्य विभूषणों से युक्त, विदेहपुत्री जानकी को अपनी गोद में रख कर शरणागत-भयहारी श्रीरामचन्द्र जी से कहा—हे रघुवीर! प्रथम तपोवन में मुझे सौंपी हुई इन देवी जानकी को आप ग्रहण कीजिए ॥ १९-२० ॥ हे हरे! आपने रावण का वध करने के लिए मायामयी सीता का निर्माण कर पुत्र एवं बन्धु-बान्धवों सहित रावण को मार डाला। अतः आपने ऐसा

तिरोहिता सा प्रतिबिम्बरूपिणी
कृता यदर्थं कृतकृत्यतां गता ।
ततोऽतिहृष्टां परिगृह्य जानकीं
रामः प्रहृष्टः प्रतिपूज्य पावकम् ॥२२॥
स्वाङ्के समावेश्य सदाऽनपायिनीं
श्रियं त्रिलोकीजननीं श्रियः पतिः ।
दृष्ट्वाऽथ रामं जनकात्मजायुतं
श्रिया स्फुरन्तं सुरनायको मुदा ।
भक्त्या गिरा गद्गदया समेत्य
कृताञ्जलिः स्तोतुमथोपचक्रमे ॥२३॥

इन्द्र उवाच

भजेऽहं सदा राममिन्दीवराभं
भवारण्य-दावानलाभाभिधानम् ।
भवानीहृदा भावितानन्दरूपं
भवाभावहेतुं भवादिप्रपन्नम् ॥२४॥

---

कार्य कर पृथ्वी का भार उतार दिया ॥ २१ ॥ इस सीता की प्रतिबिम्ब-स्वरूपा वह माया सीता जिस कार्य के लिए रची गई थी, उस कार्य को पूरा कर अब अदृश्य हो गयी। अग्निदेव द्वारा कहे गये इस वचन को सुनकर राम अत्यन्त प्रसन्न हुए। पुनः उन्होंने अग्नि का पूजन कर प्रसन्नमुखी जानकी को स्वीकार कर लिया ॥ २२ ॥ और लक्ष्मीपति राम ने अपने से कभी पृथक् न होने वाली त्रिलोकजननी महालक्ष्मी जानकी को गोद में बैठा लिया। उस समय जनकनन्दिनी जानकी के सहित भगवान् राम का महा श्री से देदीप्यमान देख देवराज इन्द्र अति प्रसन्नता पूर्वक हाथ जोड़ कर भक्ति से गद्गद वाणी से स्तुति करने लगे—॥ २३ ॥

देवराज इन्द्र ने कहा—जो नीले कमल के समान आभा वाले हैं एवं जिनका नाम संसार रूप बनके उच्छेद के लिए दावानल के समान है,

सुरानीक-दुःखौघ-नाशैकहेतुं
नराकारदेहं निराकारमीड्यम् ।
परेशं परानन्दरूपं वरेण्यं
हरिं राममीशं भजे भारनाशम् ॥२५॥
प्रपन्नाऽखिलानन्ददोहं प्रपन्नं
प्रपन्नार्ति-निःशेष-नाशाभिधानम् ।
तपोयोगयोगीश-भावाभिभाव्यं
कपीशादिमित्रं भजे राममित्रम् ॥२६॥
सदा भोगभाजां सुदूरे विभान्तं
सदा योगभाजामदूरे विभान्तम् ।
चिदानन्दकन्दं सदा राघवेशं
विदेहात्मजानन्दरूपं प्रपद्ये ॥२७॥
महायोगमाया-विशेषानुयुक्तो
विभासीश लीलानराकारवृत्तिः ।
त्वदानन्द-लीला-कथापूर्णकर्णाः
सदानन्दरूपा भवन्तीह लोके ॥२८॥

---

भवानी जिनके आनन्दस्वरूप का हृदय में ध्यान करती हैं, जो संसार से मुक्त करने वाले हैं एवं शङ्करादि देवगण जिनके शरणागत हैं। उन भगवान् राम का मैं भजन करता हूँ ॥ २४ ॥ जो देवगणों के दुःख-समूह का नाश करने में कारण हैं, जो नराकार एवं निराकार हैं एवं स्तुति के योग्य हैं। पृथ्वी का भार उतारने वाले, उन परमेश्वर परानन्द स्वरूप, परम पूजनीय भगवान् राम को मैं भजता हूँ ॥ २५ ॥

जो शरणागतों की रक्षा करने वाले, एवं भक्तजनों के आश्रय हैं तथा जिनका नाम शरणागतों के दुःख को दूर करने वाला है और जो तपोयोग एवं योगीश्वरों की भावना के अनुसार प्रगट होते हैं, उन सुग्रीव के मित्र, रामरूपी सूर्य का मैं भजन करता हूँ ॥ २६ ॥ जो भोग में आसक्त प्राणियो से सदैव दूर रहते हैं। किन्तु योगासक्त योगियों के अत्यन्त सन्निकट विराजते हैं, ऐसे विदेहात्मजा के आनन्दस्वरूप, चिदानन्दघन रघुनाथजी को मैं सर्वदा भजता हूँ ॥ २७ ॥

हे ईश ! आप महायोगमाया की विशेषताओं से युक्त होकर अपनी

अहं मानपानाभिमत्तप्रमत्तो
न वेदाखिलेशाभिमानाभिमानः ।
इदानीं भवत्पाद-पद्म-प्रसादात्
त्रिलोकाधिपत्याभिमानो विनष्टः ॥२९॥

स्फुरद्-रत्न-केयूर-हाराभिरामं
धराभार-भूतासुरानीक-दावम् ।
शरच्चन्द्रवक्त्रं लसत्पद्मनेत्रं
दुरावारपारं भजे राघवेशम् ॥३०॥

सुराधीशनीलाभ्र-नीलाङ्गकान्तिं
विराधादि-रक्षोवधाल्लोकशान्तिम् ।
किरीटादिशोभं पुरारातिलाभं
भजे रामचन्द्रं रघूणामधीशम् ॥३१॥

---

लीला से मनुष्य का रूप धारण कर चरित्र करते हैं। जिनके कान आपकी आनन्दमयी लीलाओं से पूर्ण होते हैं, वे इस संसार में नित्यानन्द स्वरूप हो जाते हैं ॥ २८ ॥ मैं अहंकार पान के उन्माद से उन्मत्त हो गया था। और अपने त्रिलोकाधिपतित्व के अभिमान से इतना अभिमानी हो गया था कि अपने सामने किसी को कुछ भी नहीं समझता था। अब आपके चरण-कमलों की कृपा से मेरा त्रिलोकाधिपतित्व का वह अभिमान नष्ट हो गया ॥ २९ ॥

देदीप्यमान रत्नजटित भुजबन्ध एवं हारों से जो सुशोभित हैं, पृथ्वी के भारस्वरूप राक्षसों का बध करने के लिए जो दावानल स्वरूप हैं। शरत्कालीन चन्द्रमा के समान जिनका मुख मनोहर तथा कमल के समान जिनके नेत्र सुशोभित हो रहे हैं। जिनका आदि, अन्त जानना अत्यन्त कठिन है, उन रघुनाथ जी को मैं भजता हूँ ॥ ३० ॥ जिनके शरीर की कान्ति इन्द्रनीलमणि के समान एवं नीलवर्ण के मेघ के समान श्यामवर्ण है, जो विराध-जैसे लोककण्टक राक्षसों का बध कर लोक में शान्ति स्थापित करते हैं। जो किरीट एवं केयूर तथा हारादि आभूषणों से विभूषित हैं। और श्रीमहादेव जी के जो परम धन हैं, उन रघुकुलाधीश तथा सुराधीश श्रीरामचन्द्र जी का मैं भजन करता हूँ ॥ ३१ ॥

लसच्चन्द्रकोटि-प्रकाशादिपीठे
समासीनमङ्के समाधाय सीताम् ।
स्फुरद्धेमवर्णां तडित्पुञ्जभासां
भजे रामचन्द्रं निवृत्तार्तितन्द्रम् ॥३२॥
ततः प्रोवाच भगवान् भवान्या सहितो भवः ।
रामं कमलपत्राक्षं विमानस्थो नभः स्थले ॥३३॥
आगमिष्याम्ययोध्यायां द्रष्टुं त्वां राज्यसत्कृतम् ।
इदानीं पश्य पितरमस्य देहस्य राघव ! ॥३४॥
ततोऽपश्यद् विमानस्थं रामो दशरथं पुरः ।
ननाम शिरसा पादौ मुदा भक्त्या सहाऽनुजः ॥३५॥
आलिङ्ग्य मूर्ध्न्यवघ्राय रामं दशरथोऽब्रवीत् ।
तारितोऽस्मि त्वया वत्स ! संसाराद् दुःखसागरात् ॥३६॥
इत्युक्त्वा पुनरालिङ्ग्य ययौ रामेण पूजितः ।
रामोऽपि देवराजं तं दृष्ट्वा प्राह कृताञ्जलिम् ॥३७॥

---

करोड़ों शरत्कालीन चन्द्रमा के समान देदीप्यमान सिंहासन पर, तेजोमयी सुवर्णवर्णा और विद्युत्-समान कान्तिमती जानकी को गोद में लिये जो विराज रहे हैं। जो दुःख और आलस्य से सर्वथा रहित हैं, उन रामचन्द्र को मैं भजता हूँ ॥ ३२ ॥

तब आकाश में विमान पर संस्थित भवानी सहित भगवान् शंकर ने कमलपत्र के समान विशाल नेत्रवाले श्रीराम से कहा—॥ ३३ ॥ हे राघव ! मैं राज्यगद्दी पर अभिषेक के समय आपका दर्शन करने के लिए अयोध्या आऊँगा। इस समय आप इस शरीर के जन्मदाता पिता दशरथ को देखिए ॥ ३४ ॥ इसके अनन्तर राम ने विमान पर बैठे हुए पिता दशरथ को अपने सामने देखा। उन्हें देखते ही श्रीराम ने लक्ष्मण सहित भक्ति-भाव से युक्त हो प्रसन्नता के साथ उनके चरणों में सिर रख कर प्रणाम किया ॥ ३५ ॥ पुनः दशरथ ने उन्हें हृदय से लगा कर उनका सिर सूँघ कर कहा—हे वत्स ! मैं इस संसाररूपी दुःख-समुद्र से तुम्हारे द्वारा पार हो गया हूँ ॥ ३६ ॥ ऐसा कहकर उन्होंने श्रीराम को पुनः हृदय से

मत्कृते निहतान् सङ्ख्ये वानरान् पतितान् भुवि ।
जीवयाशु सुधावृष्ट्या सहस्राक्ष ! ममाज्ञया ॥३८॥
तथेत्यमृतवृष्ट्या तान् जीवयामास वानरान् ।
ये ये मृता मृधे पूर्वं ते ते सुप्तोत्थिता इव ।
पूर्ववद् बलिनो हृष्टा रामपार्श्वमुपाययुः ॥३९॥
नोत्थिता राक्षसास्तत्र पीयूषस्पर्शनादपि ।
विभीषणस्तु साष्टाङ्गं प्रणिपत्याऽब्रवीद् वचः ॥४०॥
देव ! मामनुगृह्णीष्व मयि भक्तिर्यदा तव ।
मङ्गलस्नानमद्य त्वं कुरु सीतासमन्वितः ॥४१॥
अलङ्कृत्य सह भ्रात्रा श्वो गमिष्यामहे वयम् ।
विभीषणवचः श्रुत्वा प्रत्युवाच रघूत्तमः ॥४२॥
सुकुमारोऽतिभक्तो मे भरतो मामवेक्षते ।
जटावल्कलधारी स शब्दब्रह्मसमाहितः ॥४३॥

---

लगाया और उन राम से पूजित हो चले गये । रामचन्द्र जी ने देवराज इन्द्र को हाथ जोड़ खड़ा देख कर कहा–॥३७॥ हे सहस्राक्ष ! तुम मेरी आज्ञा से युद्ध में मेरे लिए मारे गये इन वानरों को, जो पृथ्वी पर गिरे हुए हैं, अमृत की वर्षा कर तुरन्त जीवित कर दो ॥ ३८ ॥ इन्द्र ने भी 'तथास्तु' कह कर अमृत की वर्षा से युद्ध में मरे हुए उन वानरों को जीवित कर दिया । वे वानर सोकर उठे हुए के समान पहले की भाँति ही बलवान् और प्रसन्न होकर श्रीराम के पास चले आये ॥ ३९ ॥ किन्तु वहाँ युद्ध में मरे हुए राक्षस अमृत के स्पर्श होने पर भी नहीं उठे । तब विभीषण ने साष्टाङ्ग प्रणाम करके कहा–॥ ४० ॥ हे देव ! यदि आप का मुझ पर अत्यन्त स्नेह है, तो मेरे ऊपर कृपा कीजिए । और सीता सहित आज मङ्गल-स्नान कीजिए ॥ ४१ ॥ फिर भाई लक्ष्मण सहित वस्त्राभूषणों से सुसज्जित हो हम लोग कल प्रस्थान करेंगे । विभीषण के वचन सुनकर श्रीराम ने कहा–॥४२॥

विभीषण ! जटावल्कल धारण किये हुए सुकुमार मेरा भक्त भरत निरन्तर शब्दब्रह्म की उपासना करता हुआ इस समय मेरी प्रतीक्षा

कथं तेन विना स्नानमलङ्कारादिकं मम।
अतः सुग्रीवमुख्यांस्त्वं पूजयाशु विशेषतः ॥४४॥
पूजितेषु कपीन्द्रेषु पूजितोऽहं न संशयः।
इत्युक्तो राघवेणाशु स्वर्णरत्नाम्बराणि च ॥४५॥
ववर्ष राक्षसश्रेष्ठो यथकामं यथारुचि।
ततस्तान् पूजितान् दृष्ट्वा रामो रत्नैश्च यूथपान् ॥४६॥
अभिनन्द्य यथान्यायं विससर्ज हरीश्वरान्।
विभीषणसमानीतं पुष्पकं सूर्यवर्चसम् ॥४७॥
आरुरोह ततो रामस्तद्विमानमनुत्तमम्।
अङ्के निधाय वैदेहीं लज्जमानां यशस्विनीम् ॥४८॥
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता।
अब्रवीच्च विमानस्थः श्रीरामः सर्ववानरान् ॥४९॥
सुग्रीवं हरिराजं च अङ्गदं च विभीषणम्।
मित्रकार्यं कृतं सर्वं भवद्भिः सह वानरैः ॥५०॥

---

करता होगा ॥४३॥ भला मैं उनके बिना किस प्रकार वस्त्र और अलङ्कार धारण कर सकता हूँ। इसलिए तुम अभी सुग्रीव आदि सभी प्रमुख वानरों को विशेष रूप से पूजा करो ॥ ४४ ॥ कपीन्द्र सुग्रीव आदि वानरों के पूजित हो जाने पर मैं पूजित हो जाऊँगा। इसमें सन्देह मत करो। रामचन्द्र जी के द्वारा इस प्रकार कहे जाने पर विभीषण ने वानरों की इच्छा और रुचि के अनुसार सुवर्ण, रत्न एवं वस्त्रों की मुक्तहस्त से वर्षा कर दी। इस प्रकार सभी वानरों को रत्नादि से सत्कृत देख श्रीरामचन्द्र जी ने सबकी यथायोग्य प्रशंसा कर उन्हें विदा कर दिया। फिर वे लज्जित हुई सीता को गोद में बैठा, महापराक्रमी भाई लक्ष्मण के साथ विभीषण द्वारा लाये गये सूर्य के समान तेजस्वी अति उत्तम पुष्पक विमान पर बैठ गये। फिर विमान में बैठने के उपरान्त श्रीराम ने वानरराज सुग्रीव, अङ्गद, विभीषण तथा समस्त वानरों से कहा—आप सभी लोगों ने इन वानरों के साथ मित्रता का जैसा आदर्श कर्त्तव्य होता है, उसे भलीभाँति

अनुज्ञाता मया सर्वे यथेष्टं गन्तुमर्हथ ।
सुग्रीव ! प्रतियाह्याशु किष्किन्धां सर्वसैनिकैः ॥५१॥
स्वराज्ये वस लङ्कायां मम भक्तो विभीषण ! ।
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥५२॥
अयोध्यां गन्तुमिच्छामि राजधानीं पितुर्मम ।
एवमुक्तास्तु रामेण वानरास्ते महाबलाः ॥५३॥
ऊचुः प्राञ्जलयः सर्वे राक्षसश्च विभीषणः ।
अयोध्यां गन्तुमिच्छामस्त्वया सह रघूत्तम ! ॥५४॥
दृष्ट्वा त्वामभिषिक्तं तु कौसल्यामभिवाद्य च ।
पश्चाद् वृणीमहे राज्यमनुज्ञां देहि नः प्रभो ! ॥५५॥
रामस्तथेति सुग्रीव ! वानरैः स-विभीषणः ।
पुष्पकं स-हनूमांश्च शीघ्रमारोह साम्प्रतम् ॥५६॥

---

पूरा किया ॥ ४५-५० ॥ आप लोग मेरी आज्ञानुसार अपने-अपने गन्तव्य स्थानों को चले जाइए। और हे सुग्रीव ! तुम अपने समस्त सैनिकों के सहित शीघ्र ही किष्किन्धा जाओ ॥ ५१ ॥

हे विभीषण ! तुम मेरी भक्ति करते हुए लङ्का में अपने राज्य पर निवास करो। देवगण सहित इन्द्र भी तुम्हारा बाल बाँका नहीं कर सकते ॥ ५२ ॥ मैं इस समय अपने पिता की राजधानी अयोध्यापुरी को जाना चाहता हूँ। श्रीराम के द्वारा इस प्रकार कहे जाने पर वे समस्त महाबली वानरगण ॥५३॥ एवं राक्षसराज विभीषण हाथ जोड़कर बोले—हे रघुश्रेष्ठ ! हम सब आपके साथ अयोध्या चलना चाहते हैं ॥ ५४ ॥ आप का राज्याभिषेक देखकर माता कौशल्या की वन्दना कर पुनः अपना राज्य ग्रहण करेंगे। हे प्रभो ! आप हमको साथ चलने की आज्ञा दीजिए ॥ ५५ ॥

तब रामचन्द्र जी ने 'बहुत अच्छा' कह कर कहा—सुग्रीव ! तुम सभी वानरों के सहित विभीषण और हनुमान् को साथ लेकर इस विमान पर

ततस्तु पुष्पकं दिव्यं सुग्रीवः सह सेनया ।
विभीषणश्च सामात्यः सर्वे चारुरुहुर्द्रुतम् ॥५७॥
तेष्वारूढेषु सर्वेषु कौबेरं परमासनम् ।
राघवेणाऽभ्यनुज्ञातमुत्पपात विहायसा ॥५८॥
बभौ तेन विमानेन हंसयुक्तेन भास्वता ।
प्रहृष्टश्च तदा रामश्चतुर्मुख इवाऽपरः ॥५९॥
ततो बभौ भास्करबिम्बतुल्यं
कुबेरयानं तपसाऽनुलब्धम् ।
रामेण शोभां नितरां प्रपेदे
सीतासमेतेन सहानुजेन ॥६०॥

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे
युद्धकाण्डे त्रयोदशः सर्गः ॥ १३ ॥

□

---

चढ़ो ॥ ५६ ॥ तब सेना समेत सुग्रीव एवं मन्त्रियों सहित विभीषण ये सभी शीघ्रता से उस पुष्पक विमान पर चढ़ गये ॥ ५७ ॥ उन सभी के इस प्रकार आरूढ़ हो जाने पर कुबेर का वह पुष्पक विमान राम की आज्ञा पा आकाश-मार्ग में उड़ चला ॥ ५८ ॥

हंस पर सवार हुए दूसरे ब्रह्मा के समान पुष्पक विमान पर चढ़े हुए परम प्रसन्न श्रीरामचन्द्र जी मालूम पड़ रहे थे ॥ ५९ ॥ उस समय तपस्या से प्राप्त हुआ वह कुबेर का पुष्पक विमान सूर्यबिम्ब के समान सुशोभित हो रहा था। सीता एवं लक्ष्मण सहित श्रीरामचन्द्र जी के बैठने से उसकी शोभा और अधिक बढ़ गई थी ॥ ६० ॥

इस प्रकार 'रामप्रिया' हिन्दी व्याख्या विभूषित अध्यात्म-रामायण के
उमा-महेश्वर संवाद में युद्धकाण्ड का तेरहवाँ सर्ग समाप्त ॥ १ ॥

□

## चतुर्दशः सर्गः

( अयोध्या-यात्रा, भरद्वाज मुनिका आतिथ्यसत्कार तथा भरत-मिलाप )

श्रीमहादेव उवाच

पातयित्वा ततश्चक्षुः सर्वतो रघुनन्दनः ।
अब्रवीन् मैथिलीं सीतां रामः शशिनिभाननाम् ॥ १ ॥
त्रिकूटशिखराग्रस्थां पश्य लङ्कां महाप्रभाम् ।
एतां रणभुवं पश्य मांसकर्दमपङ्किलाम् ॥ २ ॥
असुराणां प्लवङ्गानामत्र वैशसनं महत् ।
अत्र मे निहतः शेते रावणो राक्षसेश्वरः ॥ ३ ॥
कुम्भकर्णेन्द्रजिन्मुख्याः सर्वे चाऽत्र निपातिताः ।
एष सेतुर्मया बद्धः सागरे सलिलाशये ॥ ४ ॥
एतच्च दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्धमिति ख्यातं त्रैलोक्येन च पूजितम् ॥ ५ ॥
एतत् पवित्रं परमं दर्शनात् पातकापहम् ।
अत्र रामेश्वरो देवो मया शम्भुः प्रतिष्ठितः ॥ ६ ॥

---

श्रीमहादेव जी ने कहा—हे पार्वती, पुष्पक विमान पर चढ़े हुए श्रीराम, चारों ओर देखते हुए चन्द्रमुखी विदेहपुत्री सीता से बोले—॥ १ ॥

हे सीत ! त्रिकूट की चोटी पर बसी हुई परम प्रकाशमयी इस लङ्कापुरी को देखो, और मांस के कीचड़ से सनी हुई इस रणभूमि को भी देखो ॥ २ ॥ यहाँ पर वानरों और राक्षसों में भयंकर युद्ध होने से भयानक संहार हुआ है। यहाँ पर मेरे हाथ से मारा गया राक्षसराज रावण गिरा था ॥ ३ ॥ यहीं पर कुम्भकर्ण एवं इन्द्रजित् मेघनाद और समस्त राक्षस वीर मारे गये हैं। और यह मैंने जलपूर्ण समुद्र पर पुल बाधा है ॥ ४ ॥ देखो, इस विशाल समुद्र पर सेतुबन्ध नामक तीर्थ दिखाई दे रहा है, जो तीनों लोकों में पूजनीय है ॥ ५ ॥

यह सेतुबन्ध तीर्थ परम पवित्र है और यह दर्शन मात्र से तीनों लोकों

अत्र मां शरणं प्राप्तो मन्त्रिभिश्च विभीषणः ।
एषा सुग्रीवनगरी किष्किन्धा चित्रकानना ॥ ७ ॥
तत्र रामाज्ञया ताराप्रमुखा हरियोषितः ।
आनयामास सुग्रीवः सीतायाः प्रियकाम्यया ॥ ८ ॥
ताभिः सहोत्थितं शीघ्रं विमानं प्रेक्ष्य राघवः ।
प्राह चाद्रिमृष्यमूकं पश्य वाल्यत्र मे हतः ॥ ९ ॥
एषा पञ्चवटी नाम राक्षसा यत्र मे हताः ।
अगस्त्यस्य सुतीक्ष्णस्य पश्याऽऽश्रमपदे शुभे ! ॥१०॥
एते ते तापसाः सर्वे दृश्यन्ते वरवर्णिनि ! ।
असौ शैलवरो देवि ! चित्रकूटः प्रकाशते ॥११॥
अत्र मां कैकेयीपुत्रः प्रसादयितुमागतः ।
भरद्वाजाश्रमं पश्य दृश्यते यमुनातटे ॥१२॥

---

के पापों को नष्ट करनेवाला है। इस स्थान पर मैंने श्रीरामेश्वर महादेव की स्थापना की है ॥ ६ ॥ यहीं मन्त्रियों सहित विभीषण मेरी शरण आया था। यह विचित्र उपवनों से सुशोभित सुग्रीव की नगरी किष्किन्धा है ॥ ७ ॥ किष्किन्धा पहुँचने पर राम की आज्ञा से सीता को प्रसन्न करने के लिए सुग्रीव अपनी तारा आदि पत्नियों को ले आये ॥ ८ ॥ पुनः उन सभी को लेकर चलते हुए विमान को श्रीरामचन्द्र जी ने देखा। और सीता जी से पुनः कहने लगे—हे प्रिये ! इस ऋष्यमूक पर्वत को देखो, यहाँ पर मैंने बालि का वध किया है ॥ ९ ॥ और यह पञ्चवटी नामक स्थान है, जहाँ पर हमने अनेक राक्षसों का वध किया था। और हे शुभे ! देखो, यह अगस्त्य तथा सुतीक्ष्ण का परम-पवित्र आश्रम है। हे वरवर्णिनि ! ये तपस्वी गण दिखाई दे रहे हैं, इन्हें भी देखो, हे देवि ! यह पर्वत-श्रेष्ठ चित्रकूट दिखाई द रहा है ॥ १०-११ ॥

यह वही स्थान है, जहाँ मुझे मनाने के लिए कैकेयीपुत्र भरत आये थे। और यह यमुना तट पर भरद्वाज मुनि का आश्रम है, इसे भी

एषा भागीरथी गङ्गा दृश्यते लोकपावनी ।
एषा सा दृश्यते सीते ! सरयू-र्यूपमालिनी ॥१३॥
एषा सा दृश्यतेऽयोध्या प्रणामं कुरु भामिनि ! ।
एवं क्रमेण सम्प्राप्तो भरद्वाजाश्रमं हरिः ॥१४॥
पूर्णे चतुर्दशे वर्षे पञ्चम्यां रघुनन्दनः ।
भरद्वाजं मुनिं दृष्ट्वा ववन्दे सानुजः प्रभुः ॥१५॥
पप्रच्छ मुनिमासीनं विनयेन रघूत्तमः ।
शृणोषि कच्चिद् भरतः कुशल्यास्ते सहानुजः ॥१६॥
सुभिक्षा वर्ततेऽयोध्या जीवन्ति च हि मातरः ।
श्रुत्वा रामस्य वचनं भरद्वाजः प्रहृष्टधीः ॥१७॥
प्राह सर्वं कुशलिनो भरतस्तु महामनाः ।
फल-मूलकृताहारो जटावल्कलधारकः ॥१८॥

---

देखो ॥ १२ ॥ यह लोकपावनी भागीरथी गङ्गा दिखाई पड़ रही है । और यह यज्ञ के अनेक खम्भों से युक्त सरयू नदी दिखाई पड़ रही है ॥ १३ ॥ हे सुन्दरि, यह अयोध्या दिखाई दे रही है, इसे प्रणाम करो । इस प्रकार क्रम से पुष्पक विमान द्वारा श्रीराम भरद्वाज के आश्रम पर पहुँचे ॥ १४ ॥

श्रीरामचन्द्र जी चौदह वर्ष पूर्ण होने पर पञ्चमी तिथि को मुनिवर भरद्वाज का दर्शन किया और लक्ष्मण सहित उन्हें प्रणाम किया ॥ १५ ॥ फिर आश्रम में बैठे हुए भरद्वाज मुनि से श्रीरामचन्द्र जी ने विनय से पूछा—आपने कुछ सुना है, शत्रुघ्न सहित भरत कुशल से तो हैं ? ॥ १६ ॥ अयोध्या में सुभिक्ष तो है ? और हमारी माताएँ अभी तक जीवित हैं न ? राम के वचन सुन कर भरद्वाज मुनि ने प्रसन्न होकर कहा—॥ १७ ॥

अयोध्या में सभी कुशल पूर्वक हैं । महामना भरत जटा-वल्कल धारण किये, शाक-मूल-फलादि के आहार से अपना निर्वाह करते हुए आपके

पादुके सकलं न्यस्य राज्यं त्वां सुप्रतीक्षते ।
यद्यत्कृतं त्वया कर्म दण्डके रघुनन्दन ! ॥१६॥
राक्षसानां विनाशं च सीताहरणपूर्वकम् ।
सर्वं ज्ञातं मया राम ! तपसा ते प्रसादतः ॥२०॥
त्वं ब्रह्म परमं साक्षादादि-मध्यान्त-वर्जितः ।
त्वमग्रे सलिलं सृष्ट्वा तत्र सुप्तोऽसि भूतकृत ॥२१॥
नारायणोऽसि विश्वात्मन् ! नराणामन्तरात्मकः ।
त्वन्नाभिकमलोत्पन्नो ब्रह्मा लोकपितामहः ॥२२॥
अतस्त्वं जगतामीशः सर्वलोकनमस्कृतः ।
त्वं विष्णुर्जानकी लक्ष्मीः शेषोऽयं लक्ष्मणाभिधः ॥२३॥
आत्मना सृजसीदं त्वमात्मन्येवात्म-मायया ।
न सज्जसे नभोवत्त्वं चिच्छक्त्या सर्वसाक्षिकः ॥२४॥

---

पादुकाओं को अपना सारा राज्य सौंपकर आपकी प्रतीक्षा कर रहे हैं। हे रघुनन्दन ! आपने दण्डकवन में जो-जो कार्य किये हैं, एवं सीता का हरण हो जाने पर आपने जिस प्रकार से राक्षसों का वध किया है। वह सब आपकी कृपा एवं मैंने अपने तपोबल से जान लिया है॥ १८–२०॥ आप आदि, मध्य और अन्त से रहित साक्षात् परब्रह्म हैं। आप समस्त भूतों की रचना करते हैं। सर्व-प्रथम जल की सृष्टि कर आप उसमें शयन करते हैं ॥ २१ ॥

हे विश्वात्मन् ! आप सभी प्राणियों के अन्तरात्मा हैं, नारायण हैं। आपकी नाभि-कमल से उत्पन्न ब्रह्मा लोक के पितामह हैं ॥ २२ ॥ इसलिए आप समस्त लोकों से वन्दित और सम्पूर्ण जगत् के स्वामी हैं। आप विष्णु हैं, जानकी लक्ष्मी हैं और ये लक्ष्मण शेष नाग हैं ॥ २३ ॥ आप अधिष्ठान रूप से अपने भीतर ही अपने आप इस जगत् की माया द्वारा सृष्टि करते हैं। किन्तु आकाश के समान किसी से लिप्त नहीं होते। आप अपनी चित्-शक्ति से सबके साक्षी हैं ॥ २४ ॥

बहिरन्तश्च भूतानां त्वमेव रघुनन्दन ! ।
पूर्णोऽपि मूढदृष्टीनां विच्छिन्न इव लक्ष्यसे ॥२५॥
जगत्त्वं जगदाधारस्त्वमेव परिपालकः ।
त्वमेव सर्वभूतानां भोक्ता भोज्यं जगत्पते ! ॥२६॥
दृश्यते श्रूयते यद्यत् स्मर्यते वा रघूत्तम ! ।
त्वमेव सर्वमखिलं त्वद् विनाऽन्यन्न किञ्चन ॥२७॥
माया सृजति लोकांश्च स्वगुणैरहमादिभिः ।
त्वच्छक्तिप्रेरिता राम ! तस्मात् त्वय्युपचर्यते ॥२८॥
यथा चुम्बकसान्निध्याच्चलन्त्येवाय आदयः ।
जडास्तथा त्वया दृष्टा माया सृजति वै जगत् ॥२९॥
देहद्वयमदेहस्य तव विश्वं रिरक्षिषोः ।
विराट् स्थूलं शरीरं ते सूत्रं सूक्ष्ममुदाहृतम् ॥३०॥

---

हे रघुनन्दन ! आप सभी प्राणियों के भीतर और बाहर व्याप्त हैं। इस प्रकार पूर्ण होकर भी मूढ बुद्धियों के लिए परिच्छिन्न ( देश-काल की अवधि में बँधे हुए ) जैसे दिखाई पड़ते हैं ॥ २५ ॥ आप ही जगत् हैं, आप ही इस जगत् के अधिष्ठान तथा अधिष्ठाता हैं। और उसके पालक हैं। हे जगत्पते, आप ही समस्त प्राणियों के भोक्ता तथा भोज्य हैं ॥२६॥ हे रघूत्तम ! इस जगत् में जो कुछ भी देखा जाता है एवं सुना जाता है और स्मरण किया जाता है वह सब आप ही हैं। आपके अतिरिक्त और कुछ भी नहीं है ॥ २७ ॥

हे राम ! आप की शक्ति से प्रेरित यह माया अपने अहङ्कारादि गुणों से सभी लोकों की रचना करती है, इसलिए इस रचना का कर्त्तृत्व, भोक्तृत्व आप में ही आरोप किया जाता है ॥ २८ ॥ जिस प्रकार चुम्बक की सन्निधि से लोहा-जैसा जड़ पदार्थ चलायमान हो जाता है, उसी प्रकार आप की दृष्टि पड़ते ही यह जड़ माया भी जगत् की सृष्टि करती है ॥२९॥ विश्व की रक्षा करने हेतु देहरहित भी आप दो देह धारण करते हैं। प्रथम स्थूल शरीर है, जिसे विराट् भी कहते हैं। दूसरा सूक्ष्म शरीर है,

विराजः सम्भवन्त्येते अवतारा: सहस्रशः ।
कार्यान्ते प्रविशन्त्येव विराजं रघुनन्दन ! ॥३१॥
अवतारकथां लोके ये गायन्ति गृणन्ति च ।
अनन्यमनसो मुक्तिस्तेषामेव रघूत्तम ! ॥३२॥
त्वं ब्रह्मणा पुरा भूमेर्भारहाराय राघव ! ।
प्रार्थितस्तपसा तुष्टस्त्वं जातोऽसि रघोः कुले ॥३३॥
देवकार्यमशेषेण कृतं ते राम ! दुष्करम् ।
बहुवर्षसहस्राणि मानुषं देहमाश्रितः ॥३४॥
कुर्वन् दुष्करकर्माणि लोकद्वयहिताय च ।
पापहारीणि भुवनं यशसा पूरयिष्यसि ॥३५॥
प्रार्थयामि जगन्नाथ ! पवित्रं कुरु मे गृहम् ।
स्थित्वाऽद्य भुक्त्वा सबलः श्वो गमिष्यसि पत्तनम् ॥३६॥
तथेति राघवोऽतिष्ठत् तस्मिन्नाश्रम उत्तमे ।
ससैन्यः पूजितस्तेन सीतया लक्ष्मणेन च ॥३७॥

---

जिसे सूत्रात्मा भी कहते हैं ॥ ३० ॥ हे रघुनन्दन ! आप के इस विराट् शरीर से ही इस प्रकार के सहस्रों अवतार होते रहते हैं। और अपना काम पूरा कर उस विराट् शरीर में लीन हो जाते हैं ॥ ३१ ॥ आपकी अवतार-कथा का जो लोग अनन्यचित्त से गान करते हैं अथवा श्रवण करते हैं। उनकी मुक्ति अवश्य हो जाती है, इसमें संशय नहीं है। हे राघव ! आप ने ब्रह्मा की तपस्या से सन्तुष्ट हो कर उनके द्वारा प्रार्थना किये जाने पर ही रघुकुल में अवतार धारण किया है ॥३२-३३॥ आप ने देवताओं का यह दुष्कर कार्य पूरा कर दिया। अब बहुत हजार वर्षों तक आप इस मनुष्य शरीर में निवास करें ॥ ३४ ॥ इस लोक और परलोक के हित के लिए पापहारी अनेक दुष्कर कार्यों को करते हुए आप सम्पूर्ण लोकों को अपने सुयश से परिपूर्ण करेंगे ॥ ३५ ॥

हे जगन्नाथ, मैं आप से प्रार्थना करता हूँ कि आज सैन्य-सहित मेरे इस आश्रम में ठहर कर भोजन-विश्राम कीजिए और मेरा घर पवित्र कीजिए। फिर कल अयोध्यापुरी को जाइएगा ॥ ३६ ॥ रामचन्द्र जी

ततो रामश्चिन्तयित्वा मुहूर्तं प्राह मारुतिम् ।
इतो गच्छ हनूमंस्त्वमयोध्यां प्रति सत्वरः ॥३८॥
जानीहि कुशली कश्चिज्जनो नृपतिमन्दिरे ।
शृङ्गवेरपुरं गत्वा ब्रूहि मित्रं गुहं मम ॥३९॥
जानकीलक्ष्मणोपेतमागतं मां निवेदय ।
नन्दिग्रामं ततो गत्वा भ्रातरं भरतं मम ॥४०॥
दृष्ट्वा ब्रूहि सभार्यस्य सभ्रातुः कुशलं मम ।
सीतापहरणादीनि रावणस्य वधादिकम् ॥४१॥
ब्रूहि क्रमेण मे भ्रातुः सर्वं तत्र विचेष्टितम् ।
हत्वा शत्रुगणान् सर्वान् सभार्यः सहलक्ष्मणः ॥४२॥
उपयाति समृद्धार्थः सह ऋक्षहरीश्वरैः ।
इत्युक्त्वा तत्र वृत्तान्तं भरतस्य विचेष्टितम् ॥४३॥
सर्वं ज्ञात्वा पुनः शीघ्रमागच्छ मम सन्निधिम् ।
तथेति हनुमांस्तत्र मानुषं वपुरास्थितः ॥४४॥

---

'तथास्तु' कह कर भरद्वाज से सत्कृत हो सेना, लक्ष्मण एवं सीता के सहित उस अत्युत्तम आश्रम में ठहर गये ॥ ३७ ॥

इसके अनन्तर मुहूर्त पर्यन्त विचार कर श्रीरामचन्द्रजी ने हनुमान् से कहा—हनुमान् ! तुम शीघ्र ही यहाँ से अयोध्या को जाओ ॥ ३८ ॥ और वहाँ जाकर पता लगाओ कि राजमन्दिर में सब कुशल तो है ? शृङ्गवेरपुर मेंजाकर मेरे मित्र निषादराज से बात-चीत करना ॥३९॥ तथा उसे जानकी एवं लक्ष्मण सहित मेरे आने की सूचना भी देना । नन्दिग्राम में जाकर मेरे भाई भरत का ॥ ४० ॥ दर्शन कर जानकी एवं लक्ष्मण सहित मेरा कुशल कहना । सीता के हरण से लेकर रावणवध पर्यन्त मेरा सभी वृत्तान्त क्रम से उन्हें सुनाना । और कहना कि रामचन्द्र जी समस्त शत्रुओं को मार कर सफल मनोरथ हो, अपनी भार्या जानकी एवं भाई लक्ष्मण सहित ऋक्ष, वानरों के साथ आ रहे हैं । मेरा वृत्तान्त इस प्रकार भरत को सुनाकर उनकी सभी चेष्टाओं का पता लेकर शीघ्र ही मेरे पास चले

नन्दिग्रामं ययौ तूर्णं वायुवेगेन मारुतिः ।
गरुत्मानिव वेगेन जिघृक्षन् भुजगोत्तमम् ॥४५॥
शृङ्गवेरपुरं प्राप्य गुहमासाद्य मारुतिः ।
उवाच मधुरं वाक्यं प्रहृष्टेनाऽन्तरात्मना ॥४६॥
रामो दाशरथिः श्रीमान् सखा ते सह सीतया ।
सलक्ष्मणस्त्वां धर्मात्मा क्षेमी कुशलमब्रवीत् ॥४७॥
अनुज्ञातोऽद्य मुनिना भरद्वाजेन राघवः ।
आगमिष्यति तं देवं द्रक्ष्यसि त्वं रघूत्तमम् ॥४८॥
एवमुक्त्वा महातेजाः सम्प्रहृष्टतनूरुहम् ।
उत्पपात महावेगो वायुवेगेन मारुतिः ॥४९॥
सोऽपश्यद् रामतीर्थं च सरयूं च महानदीम् ।
तामतिक्रम्य हनुमान् नन्दिग्रामं ययौ मुदा ॥५०॥
क्रोशमात्रे त्वयोध्यायाश्चीरकृष्णाजिनाम्बरम् ।
ददर्श भरतं दीनं कृशमाश्रमवासिनम् ॥५१॥

---

आना। तब हनुमान् जी 'बहुत अच्छा' कहकर मनुष्य शरीर धारण कर तुरन्त ही वायुवेग से नन्दिग्राम में इस प्रकार से चले मानो किसी श्रेष्ठ साँप को पकड़ने के लिए वायुवेग से गरुड़ जा रहे हों ॥ ४१-४५ ॥

हनुमान्‌जी ने शृङ्गवेरपुर में जाकर गुह के समीप अति प्रसन्न हो मधुर वाणी में कहा—॥४६॥ तुम्हारे परम मित्र, परम धार्मिक, क्षेम युक्त दशरथ कुमार श्रीरामचन्द्रजी ने सीता एवं लक्ष्मण सहित अपना कुशल तुमसे कहा है ॥ ४७ ॥ मुनिवर भरद्वाज की आज्ञा लेकर वे आज ही आवेंगे। पुनः तुम उन रघुश्रेष्ठ राम का दर्शन करोगे ॥ ४८ ॥ और रोमाञ्चित हुए गुह से इस प्रकार का समाचार कहकर वेगवान् महा तेजस्वी हनुमान् बड़े वेग से उड़े ॥ ४९ ॥ उन्होंने राम की तीर्थभूता अयोध्या नगरी और सरयू नदी के दर्शन किये। उसे भी पार कर बड़ी प्रसन्नता से नन्दिग्राम की ओर चले ॥ ५० ॥

तदनन्तर अयोध्या से एक कोस चलने के पश्चात् नन्दिग्राम में वल्कल, कृष्ण मृगचर्म धारण किये दीन और दुर्बल स्थिति में आश्रम

मलपङ्कविदिग्धाङ्गं जटिलं वल्कलाम्बरम् ।
फलमूलकृताहारं रामचिन्तापरायणम् ॥५२॥
पादुके ते पुरस्कृत्य शासयन्तं वसुन्धराम् ।
मन्त्रिभिः पौरमुख्यैश्च काषायाम्बरधारिभिः ॥५३॥
धृतदेहं मूर्तिमन्तं साक्षाद्धर्ममिव स्थितम् ।
उवाच प्राञ्जलिर्वाक्यं हनूमान् मरुतात्मजः ॥५४॥
यं त्वं चिन्तयसे रामं तापसं दण्डके स्थितम् ।
अनुशोचसि काकुत्स्थः स त्वां कुशलमब्रवीत् ॥५५॥
प्रियमाख्यामि ते देव ! शोकं त्यज सुदारुणम् ।
अस्मिन् मुहूर्ते भ्रात्रा त्वं रामेण सह सङ्गतः ॥५६॥
समरे रावणं हत्वा रामः सीतामवाप्य च ।
उपयाति समृद्धार्थः स-सीतः सहलक्ष्मणः ॥५७॥
एवमुक्तो महातेजा भरतो हर्षमूर्च्छितः ।
पपात भुवि चास्वस्थः कैकेयीप्रियनन्दनः ॥५८॥

---

में निवास करते, संस्कार रहित होने से मैले-कुचैले, फल-मूलादि भोजन कर भगवान् राम में ध्यान लगाये, राम की दी हुई पादुकाओं को आगे रख कर शासन करते हुए और काषाय वस्त्र धारण किये मन्त्रियों एवं मुख्य-मुख्य पुरवासियों से घिरे हुए, साक्षात् मूर्तिमान् धर्म के समान भरत को देखकर पवनकुमार हनुमान् जी हाथ जोड़कर उनसे बोले—॥ ५१—५४ ॥

हे महात्मन् ! दण्डक वन में निवास करने वाले जिस तपस्वी राम का आप चिन्तन करते हैं। और जिसके लिए आप इतने अनुतप्त हैं, उन ककुत्स्थ वंशीय राम ने आपसे अपना कुशल कहा है ॥ ५५ ॥ हे देव ! अब आप अपना दारुण शोक त्यागिए। मैं आपको परम प्रिय समाचार सुनाता हूँ। आप इसी मुहूर्त में अपने भाई राम से मिलेंगे ॥ ५६ ॥ श्रीराम रावण को युद्ध में मारकर श्री सीता को प्राप्त कर और अपना मनोरथ पूरा कर सीता और लक्ष्मण सहित आ रहे हैं ॥ ५७ ॥

हनुमान् जी के इस प्रकार कहने पर कैकेयी के प्रिय पुत्र महातेजस्वी भरत जी हर्ष से मूर्च्छित हो अचेत होकर पृथ्वी पर गिर पड़े ॥ ५८ ॥

आलिङ्गय भरतः शीघ्रं मारुतिं प्रियवादिनम् ।
आनन्दजैरश्रुजलैः सिषेच भरतः कपिम् ॥५९॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ।
प्रियाख्यानस्य ते सौम्य ! ददामि ब्रुवतः प्रियम् ॥६०॥
गवां शतसहस्रं च ग्रामाणां च शतं वरम् ।
सर्वाभरण-सम्पन्ना मुग्धाः कन्यास्तु षोडश ॥६१॥
एवमुक्त्वा पुनः प्राह भरतो मारुतात्मजम् ।
बहूनीमानि वर्षाणि गतस्य सुमहद्वनम् ॥६२॥
शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम् ।
कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ॥६३॥
एति जीवन्तमानन्दो नरं वर्षशतादपि ।
राघवस्य हरीणां च कथमासीत् समागमः ॥६४॥
तत्त्वमाख्याहि भद्रं ते विश्वसेयं वचस्तव ।
एवमुक्तोऽथ हनुमान् भरतेन महात्मना ॥६५॥

---

जब उन्हें चेत हुआ तो शीघ्र ही प्रिय भाषण करने वाले हनुमान् जी को हृदय से लगा लिया। और आनन्द के कारण उमड़े अश्रु-जल से हनुमान् जी को सींचने लगे ॥ ५९ ॥ पुनः बोले–भाई ! तुम कोई देवता हो या मनुष्य ही हो जो मुझ पर दया करके यहाँ आये हो ? इस प्रिय समाचार के सुनाने के बदले ॥ ६० ॥ मैं तुम्हें सौ गाय, सौ ग्राम और सर्वाभरण विभूषित परम सुन्दरी सोलह कन्यायें देता हूँ ॥ ६१ ॥

ऐसा कहकर भरत जी ने हनुमान् जी से फिर कहा––भयंकर वन में जाने के बाद बहुत वर्ष बीत जाने पर मैं अपने प्रभु राम का यह प्रिय समाचार आज सुन रहा हूँ। आज मुझे यह कल्याणमयी लौकिक कहावत बहुत ठीक मालूम पड़ती है कि यदि मनुष्य जीवित रहे, तो उसे सौ वर्ष के बाद भी कभी-न-कभी आनन्द की प्राप्ति हो जाती है। तुम्हारा कल्याण हो, तुम सच-सच बताओ कि श्रीरामचन्द्र जी का वानरों के साथ समागम किस प्रकार हुआ। जिससे मैं तुम्हारे वचनों पर विश्वास करूँ।

आचचक्षेऽथ रामस्य चरितं कृत्स्नशः क्रमात् ।
श्रुत्वा तु परमानन्दं भरतो मारुतात्मजात् ॥६६॥
आज्ञापयच्छत्रुहणं मुदा युक्तं मुदान्वितः ।
दैवतानि च यावन्ति नगरे रघुनन्दन ! ॥६७॥
नानोपहारबलिभिः पूजयन्तु महाधियः ।
सूता वैतालिकाश्चैव वन्दिनः स्तुति-पाठकाः ॥६८॥
वारमुख्याश्च शतशो निर्यान्त्वद्यैव सङ्घशः ।
राजदारास्तथाऽमात्याः सेना हस्त्यश्वपत्तयः ॥६९॥
ब्राह्मणाश्च तथा पौरा राजानो ये समागताः ।
निर्यान्तु राघवस्याऽद्य द्रष्टुं शशिनिभाननम् ॥७०॥
भरतस्य वचः श्रुत्वा शत्रुघ्न-परिचोदिताः ।
अलञ्चक्रुश्च नगरीं मुक्तारत्नमयोज्ज्वलैः ॥७१॥
तोरणैश्च पताकाभिर्विचित्राभिरनेकधा ।
अलङ्कुर्वन्ति वेश्मानि नानाबलिविचक्षणाः ॥७२॥

---

महात्मा भरत के द्वारा इस प्रकार कहने पर हनुमान् जी ने श्रीराम का सारा चरित्र सुना दिया। जिसे सुनकर भरत जी अत्यन्त आनन्दित हुए ॥ ६२-६६ ॥ उन्होंने प्रसन्न होकर आनन्दमग्न शत्रुघ्न जी को आज्ञा दी कि हे रघुनन्दन ! नगर में जितने भी देवता हैं, बुद्धिमान् पण्डित जन उन सभी देवताओं को नाना प्रकार से भेंट और बलि देकर उनका पूजन करें। सूत, वैतालिक, वन्दी एवं स्तुतिपाठक गण तथा मुख्य-मुख्य वाराङ्गनाएँ आज ही सैकड़ों की संख्या में टोली बनाकर नगर के बाहर निकलें। इसके अतिरिक्त रानियाँ, अमात्यगण, हाथी, घोड़े एवं पैदल सेना, ब्राह्मण लोग, पुरवासी और यहाँ आये हुए समस्त राजा-गण भी चन्द्रमुख श्रीरामचन्द्रजी का दर्शन करने के लिए चलें ॥६७-७०॥

भरत की बात सुनकर शत्रुघ्न की प्रेरणा से अनेक रचनाओं में कुशल चित्रकारों ने अनेक प्रकार के उज्ज्वल मोतियों तथा नाना प्रकार के रत्नों, वन्दनवारों एव चित्र-विचित्र पताकाओं से अयोध्यापुरी को

निर्यान्ति वृन्दशः सर्वे रामदर्शनलालसाः ।
हयानां शतसाहस्रं गजानामयुतं तथा ॥७३॥
रथानां दशसाहस्रं स्वर्णसूत्रविभूषितम् ।
पारमेष्ठीन्युपादाय द्रव्याण्युच्चावचानि च ॥७४॥
ततस्तु शिबिकारूढा निर्ययू राजयोषितः ।
भरतः पादुके न्यस्य शिरस्येव कृताञ्जलिः ॥७५॥
शत्रुघ्नसहितो रामं पादचारेण निर्ययौ ।
तदैव दृश्यते दूराद् विमानं चन्द्रसन्निभम् ॥७६॥
पुष्पकं सूर्यसङ्काशं मनसा ब्रह्मनिर्मितम् ।
एतस्मिन् भ्रातरौ वीरौ वैदेह्या राम-लक्ष्मणौ ॥७७॥
सुग्रीवश्च कपिश्रेष्ठो मन्त्रिभिश्च विभीषणः ।
दृश्यते पश्यत जना इत्याह पवनात्मजः ॥७८॥
ततो हर्षसमुद्भूतो निःस्वनो दिवमस्पृशत् ।
स्त्री-बाल-युव-वृद्धानां रामोऽयमिति कीर्तनात् ॥७९॥

---

सजा दिया ॥ ७१–७२ ॥ सभी लोग श्रीराम के दर्शन की लालसा से टोली बना कर नगर के बाहर आने लगे। और उनके भेंट के लिए एक लाख घोड़े, दस हजार हाथी, सुनहरी बागडोर से विभूषित दस हजार रथ आदि ऐश्वर्य सूचक छोटी-बड़ी वस्तुएँ लिये हुए थे ॥ ७३–७४ ॥ उनके पिछे रानियाँ पालकी में सवार होकर चल रही थीं। तदनन्तर भरत जी शत्रुघ्न के साथ राम की पादुका अपने शिर पर रख कर हाथ जोड़े हुए पैदल चले। उसी समय दूर ही से ब्रह्माजी का मनोनिर्मित सूर्य के समान तेजस्वी और चन्द्रमा के समान कान्तिमान् पुष्पक विमान आता हुआ दिखाई पड़ा।

तब पवनात्मज हनूमान् ने कहा—अरे देखो, इस विमान से सीता समेत राम-लक्ष्मण, कपिश्रेष्ठ सुग्रीव एवं मन्त्रियों सहित विभीषण आते हुए दिखाई पड़ रहे हैं ॥ ७५–७८ ॥ फिर स्त्री, बालक, युवा और वृद्धों के हर्ष के कारण 'राम आ गये, राम आ गये' इस प्रकार कहने से इतना

रथ-कुञ्जर-वाजिस्था अवतीर्य महीं गताः ।
ददृशुस्ते विमानस्थं जनाः सोममिवाम्बरे ॥८०॥
प्राञ्जलिर्भरतो भूत्वा प्रहृष्टो राघवोन्मुखः ।
ततो विमानाग्रगतं भरतो राघवं मुदा ॥८१॥
ववन्दे प्रणतो रामं मेरुस्थमिव भास्करम् ।
ततो रामाभ्यनुज्ञातं विमानमपतद् भुवि ॥८२॥
आरोपितो विमानं तद् भरतः सानुजस्तदा ।
राममासाद्य मुदितः पुनरेवाभ्यवादयत् ॥८३॥
समुत्थाप्य चिराद् दृष्टं भरतं रघुनन्दनः ।
भ्रातरं स्वाङ्कमारोप्य मुदा तं परिषस्वजे ॥८४॥
ततो लक्ष्मणमासाद्य वैदेहीं नाम कीर्तयन् ।
अभ्यवादयत प्रीतो भरतः प्रेमविह्वलः ॥८५॥

---

कोलाहलपूर्ण शब्द हुआ कि उससे आसमान गूँज उठा ॥ ७९ ॥ रथ, हाथी एवं घोड़ों पर सवार हुए लोग उतरकर पृथ्वी में खड़े हो गये । उस समय सभी लोग पुष्पक विमान से आते हुए श्रीरामचन्द्र जी को आकाश में चन्द्रमा के समान देखने लगे ॥ ८० ॥

पुनः प्रसन्न चित्त भरत जी ने विमान पर बैठे हुए श्रीरामचन्द्र जी के सामने खड़े होकर सुमेरु पर्वत पर प्रकट हुए सूर्य के समान अत्यन्त विनीत हो हर्षपूर्वक प्रणाम किया । तत्पश्चाद् राम की आज्ञा से विमान पृथ्वी पर उतरा ॥ ८१-८२ ॥ पुनः भगवान् रामने भाई शत्रुघ्न सहित भरतजी को भी विमान पर चढ़ा लिया । भरत ने राम को प्राप्त कर अत्यन्त प्रसन्न हो उन्हें पुनः प्रणाम किया ॥ ८३ ॥ श्रीराम ने बहुत दिनों पर देखे हुए भाई भरत को तुरन्त ही उठा कर प्रसन्नता से अपनी गोद में लेकर आलिङ्गन किया ॥ ८४ ॥ तथा प्रेम में विह्वल हुए भरत जी ने लक्ष्मण जी से मिल कर श्री सीता जी को अपना नाम उच्चारण करते हुए प्रीतिपूर्वक प्रणाम किया ॥ ८५ ॥

सुग्रीवं जाम्बवन्तं च युवराजं तथाऽङ्गदम् ।
मैन्द-द्विविद-नीलांश्च ऋषभं चैव सस्वजे ॥८६॥
सुषेणं च नलं चैव गवाक्षं गन्धमादनम् ।
शरभं पनसं चैव भरतः परिषस्वजे ॥८७॥
सर्वे ते मानुषं रूपं कृत्वा भरतमादृताः ।
पप्रच्छुः कुशलं सौम्याः प्रहृष्टाश्च प्लवङ्गमाः ॥८८॥
ततः सुग्रीवमालिङ्ग्य भरतः प्राह भक्तितः ।
त्वत्सहायेन रामस्य जयोऽभूद् रावणो हतः ॥८९॥
त्वमस्माकं चतुर्णां तु भ्राता सुग्रीव पञ्चमः ।
शत्रुघ्नश्च तदा राममभिवाद्य सलक्ष्मणम् ॥९०॥
सीतायाश्चरणौ पश्चाद् ववन्दे विनयान्वितः ।
रामो मातरमासाद्य विवर्णां शोक-विह्वलाम् ॥९१॥
जग्राह प्रणतः पादौ मनो मातुः प्रसादयन् ।
कैकेयीं च सुमित्रां च ननामेतरमातरौ ॥९२॥

---

तदनन्तर भरत जी ने सुग्रीव, जाम्बवान् , युवराज अङ्गद, मैन्द, द्विविद, नील, ऋषभ, सुषेण, नल, गवाक्ष, गन्धमादन, शरभ और पनस को भी हृदय से लगाया। इस प्रकार भरत जी से सत्कृत हुए उन सौम्य वानरों ने भी मनुष्य रूप धारण कर उनका कुशल-मङ्गल पूछा ॥८६-८८॥

सुग्रीव का आलिङ्गन कर भरत जी ने अत्यन्त प्रेम पूर्वक कहा—सुग्रीव ! तुम्हारी सहायता से ही राम की विजय हुई और रावण मारा गया ॥८९॥ अतः हम चारों के तुम पाँचवें भाई हो। फिर शत्रुघ्न ने लक्ष्मण सहित श्रीराम को प्रणाम कर अत्यन्त विनम्रता से सीता जी के चरणों में वन्दना की। श्रीरामचन्द्र जी ने शोक के कारण विह्वल और कृश हुई अपनी माता कौशल्या के पास जाकर विनीत भाव से चरण छुए। और उनके चित्त को प्रसन्न किया। इसी प्रकार उन्होंने विमाता कैकेयी को तथा सुमित्रा को भी प्रणाम किया ॥ ९०-९२ ॥

भरतः पादुके ते तु राघवस्य सुपूजिते ।
योजयामास रामस्य पादयोर्भक्तिसंयुतः ॥६३॥
राज्यमेतन् न्यासभूतं मया निर्यातितं तव ।
अद्य मे सफलं जन्म फलितो मे मनोरथः ॥६४॥
यत् पश्यामि समायातमयोध्यां त्वामहं प्रभो ! ।
कोष्ठागारं बलं कोशं कृतं दशगुणं मया ॥६५॥
त्वत्तेजसा जगन्नाथ ! पालयस्व पुरं स्वकम् ।
इति ब्रुवाणं भरतं दृष्ट्वा सर्वे कपीश्वराः ॥६६॥
मुमुचुर्नेत्रजं तोयं प्रशशंसुर्मुदान्विताः ।
ततो रामः प्रहृष्टात्मा भरतं स्वाङ्कगं मुदा ॥६७॥
ययौ तेन विमानेन भरतस्याश्रमं तदा ।
अवरुह्य तदा रामो विमानाग्र्यान् महीतलम् ॥६८॥
अब्रवीत् पुष्पकं देवो गच्छ वैश्रवणं वह ।
अनुगच्छाऽनुजानामि कुबेरं धनपालकम् ॥६९॥

---

तदनन्तर भरत जी ने बहुत दिनों से पूजित पादुका को भक्ति के साथ श्रीराम के चरणों में पहनाया ॥ ६३॥ और कहा—हे प्रभो ! धरोहर रूप से मुझे सौंपे गये आप के इस राज्य को अब मैं पुनः आप को सौंपता हूँ। आज मेरा जन्म सफल हो गया और आज मेरा मनोरथ भी सफल हो गया ॥ ६४ ॥ हे प्रभो ! जो आज मैं अयोध्या में आये हुए आप का दर्शन कर रहा हूँ। मैंने आप की कृपा से अन्न-भण्डार, सेना और कोश आदि राज्याङ्गों को पहले से दश गुना बढ़ा दिया है। हे जगन्नाथ ! अब आप अपने नगर का स्वयं पालन कीजिए। भरत जी को इस प्रकार कहते देख मुख्य-मुख्य वानर हर्ष से आँसू बहा कर उनकी प्रशंसा करने लगे। फिर रामचन्द्र जी प्रसन्नतापूर्वक भरत जी को गोद में लिये उसी विमान से भरत जी के आश्रम गये। वहाँ विमान-श्रेष्ठ उस पुष्पक से नीचे पृथ्वी पर उतर कर श्रीराम ने उससे कहा—अब तुम धनाधिपति कुबेर का अनुसरण करते हुए उन्हीं को वहन करो ॥ ६५–६९ ॥

रामो वसिष्ठस्य गुरोः पदाम्बुजं
नत्वा यथा देवगुरोः शतक्रतुः ।
दत्त्वा महार्हासनमुत्तमं गुरो-
रुपाविवेशाथ गुरोः समीपतः ॥१००॥

इति श्रीमदध्यात्मरामायणे उमा-महेश्वरसंवादे युद्धकाण्डे
चतुर्दशः सर्गः ॥ १४ ॥



## पञ्चदशः सर्गः

( श्रीरामका राज्याभिषेक )

श्रीमहादेव उवाच

ततस्तु कैकयीपुत्रो भरतो भक्तिसंयुतः ।
शिरस्यञ्जलिमाधाय ज्येष्ठं भ्रातरमब्रवीत् ॥ १ ॥
माता मे सत्कृता राम दत्त्वं राज्यं त्वया मम ।
ददामि तत्ते च पुनर्यथा त्वमददा मम ॥ २ ॥
इत्युक्त्वा पादयोर्भक्त्या साष्टाङ्गं प्रणिपत्य च ।
बहुधा प्रार्थयामास कैकेय्या गुरुणा सह ॥ ३ ॥

---

फिर जैसे इन्द्र देवगुरु बृहस्पति की वन्दना करते हैं, उसी प्रकार श्रीरामचन्द्र जी ने भी अपने कुलगुरु वसिष्ठ के चरणों की वन्दना की। और उन्हें बहुमूल्य आसन देकर स्वयं भी उनके पास बैठ गये ॥ १०० ॥

इस प्रकार 'रामप्रिया' हिन्दी व्याख्या सहित अध्यात्म-रामायण के उमा-महेश्वर-संवाद में युद्धकाण्ड का चौदहवाँ सर्ग समाप्त ॥१४॥



तदनन्तर कैकेयीपुत्र भरत शिर में अञ्जलि बाँधे हुए बड़ी भक्ति से अपने जेठे भाई राम से बोले—॥ १ ॥ हे राम! आपने मुझे राज्य देकर मेरी माता का सत्कार किया। जैसे आप ने मुझे राज्य दिया था, अब फिर वही राज्य मैं आपको वैसे ही सौंपता हूँ ॥ २ ॥ ऐसा कह

तथेति प्रतिजग्राह भरताद् राज्यमीश्वरः ।
मायामाश्रित्य सकलां नरचेष्टामुपागतः ॥ ४ ॥

स्वाराज्यानुभवो यस्य सुखज्ञानैकरूपिणः ।
निरस्तातिशयानन्दरूपिणः परमात्मनः ॥ ५ ॥

मानुषेण तु राज्येन किं तस्य जगदीशितुः ।
यस्य भ्रूभङ्गमात्रेण त्रिलोकी नश्यति क्षणात् ॥ ६ ॥

यस्याऽनुग्रहमात्रेण भवन्त्याखण्डलश्रियः ।
लीलासृष्टमहासृष्टेः कियदेतद् रमापतेः ॥ ७ ॥

तथापि भजतां नित्यं कामपूर-विधित्सया ।
लीलामानुषदेहेन सर्वमप्यनुवर्तते ॥ ८ ॥

ततः शत्रुघ्नवचनान् निपुणः श्मश्रुकृन्तकः ।
सम्भाराश्चाऽभिषेकार्थमानीता राघवस्य हि ॥ ९ ॥

---

कर उन्होंने श्रीराम के चरणों में साष्टाङ्ग प्रणाम किया। और उस राज्य को स्वीकार करने के लिए माता कैकेयी और गुरु वसिष्ठ के साथ राम की प्रार्थना करने लगे ॥ ३ ॥

तब अपनी माया का आश्रय कर मनुष्य-लीला में प्रवृत्त हुए श्रीरामचन्द्रजीने 'तथास्तु' कहकर उस राज्यको भरतजी से ले लिया ॥४॥ जिन्हें निरन्तर स्वाराज्य ( स्वर्गीय-राज्य ) का अनुभव होता रहता है एवं जो चिदानन्द स्वरूप हैं, जिनका अतिशय आनन्द स्वरूप कभी भी अस्त नहीं होता, उस परमात्मा को इस तुच्छ मानवी राज्य से क्या लेना-देना है। जिनके भ्रूभङ्ग मात्र से सारी त्रिलोकी क्षणभर में नष्ट हो जाती है ॥५-६॥ और जिनके अनुग्रह मात्र से इन्द्र की राज्य-लक्ष्मी भी प्राप्त हो जाती है। जिन्होंने लीलामात्र से इस महान् सृष्टि की रचना की है, उन लक्ष्मीपति के लिए यह राज्य कितना है? ॥ ७ ॥ फिर भी अपने भजन करने वाले भक्तों की कामना को पूर्ण करने की इच्छा से इस मायामानव देह से वे सब कुछ अभिनय करते रहते हैं ॥ ८ ॥

पश्चात् शत्रुघ्न की आज्ञा से निपुण नाई बुलाया गया। और राम के

पूर्वं तु भरते स्नाते लक्ष्मणे च महात्मनि।
सुग्रीवे वानरेन्द्रे च राक्षसेन्द्रे विभीषणे ॥१०॥
विशोधितजटः स्नातश्चित्रमाल्यानुलेपनः।
महार्हवसनोपेतस्तस्थौ तत्र श्रिया ज्वलन् ॥११॥
प्रतिकर्म च रामस्य लक्ष्मणश्च महामतिः।
कारयामास भरतः सीताया राजयोषितः ॥१२॥
महार्हवस्त्राभरणैरलङ्कृत्य सुमध्यमाम्।
ततो वानरपत्नीनां सर्वासामेव शोभना ॥१३॥
अकारयत कौसल्या प्रहृष्टा पुत्रवत्सला।
ततः स्यन्दनमादाय शत्रुघ्नवचनात् सुधीः ॥१४॥
सुमन्त्रः सूर्यसङ्काशं योजयित्वाऽग्रतः स्थितः।
आरुरोह रथं रामः सत्यधर्मपरायणः ॥१५॥
सुग्रीवो युवराजश्च हनूमांश्च विभीषणः।
स्नात्वा दिव्याम्बरधरा दिव्याभरणभूषिताः ॥१६॥

---

अभिषेक के लिए सारी सामग्री भी एकत्रित की गयी ॥ ९ ॥ सर्व-प्रथम भरत ने स्नान किया। तदनन्तर महात्मा लक्ष्मण ने फिर वानरराज सुग्रीव ने तदनन्तर विभीषण ने स्नान किया ॥ १० ॥ जटाजूट कट जाने के बाद श्रीराम ने स्नान किया। और रङ्ग-बिरङ्गी मालाओं, विविध अङ्गरागों तथा बहुमूल्य वस्त्रों से सुसज्जित हो अपनी कान्ति से देदीप्यमान हो, वे विराजमान हो गये ॥ ११ ॥ फिर महामति लक्ष्मण एवं भरत ने राम को सभी प्रकार से अलंकृत करवाया। इधर रानियों ने भी सुन्दरी सीता को बहुमूल्य वस्त्रों एवं आभूषणों से शृङ्गार कर सुसज्जित किया। तदनन्तर कल्याणमयी पुत्र-वत्सला कौशल्या ने भी प्रसन्नता से वानर-पत्नियों का शृङ्गार कराया। इसी समय शत्रुघ्न की आज्ञा से बुद्धिमान् सुमन्त्र ने भी सूर्य के समान देदीप्यमान रथ जोत कर सामने ला कर खड़ा कर दिया। तदनन्तर सत्यधर्म परायण राम उस रथ पर सवार हुए ॥ १२-१५ ॥

सुग्रीव, युवराज अङ्गद, हनुमान् और विभीषण भी स्नान कर दिव्य

रामममन्वीयुरग्रे च रथा-ऽश्व-गजवाहनाः ।
सुग्रीवपत्न्यः सीता च ययुर्यानैः पुरं महत् ॥१७॥
वज्रपाणिर्यथा देवैर्हरिताश्वरथे स्थितः ।
प्रययौ रथमास्थाय तथा रामो महत्पुरम् ॥१८॥
सारथ्यं भरतश्चक्रे रत्नदण्डं महाद्युतिः ।
श्वेतातपत्रं शत्रुघ्नो लक्ष्मणो व्यजनं दधे ॥१९॥
चामरं च समीपस्थो न्यवीजयदरिन्दमः ।
शशिप्रकाशं त्वपरं जग्राहाऽसुरनायकः ॥२०॥
दिविजैः सिद्धसङ्घैश्च ऋषिभिर्दिव्यदर्शनैः ।
स्तूयमानस्य रामस्य शुश्रुवे मधुरध्वनिः ॥२१॥
मानुषं रूपमास्थाय वानरा गजवाहनाः ।
भेरी-शङ्ख-निनादैश्च मृदङ्ग-पणवानकैः ॥२२॥
प्रययौ राघवश्रेष्ठस्तां पुरीं समलङ्कृताम् ।
ददृशुस्ते समायान्तं राघवं पुरवासिनः ॥२३॥

---

वस्त्र और दिव्य आभूषणों से सुसज्जित हो हाथी, घोड़े एवं रथ पर सवार हो राम के आगे-पीछे चले। सुग्रीव की पत्नियाँ एवं सीताजी भी सुन्दर पालकियों में बैठ कर विशाल अयोध्या नगर में चलीं॥ १६-१७॥

जिस प्रकार वज्रपाणि देवराज इन्द्र देवताओं के साथ हरित वर्ण के घोड़ों से जुटे हुए रथ में चलते हैं, उसी प्रकार भगवान् राम भी रथ में बैठ कर अयोध्यापुरी को चले॥ १८॥ उस समय भरत ने सारथी का काम लेकर रथ चलाया। शत्रुघ्न ने रत्नजटित दण्ड वाले श्वेत छत्र को लगाया। लक्ष्मण जी पङ्खा डुलाने लगे॥ १९॥ शत्रुदमन सुग्रीव ने एक ओर से तथा दूसरी ओर से राक्षसराज विभीषण ने चन्द्रमा के समान कान्तियुक्त चँवर डुलाया॥२०॥ उस समय देवताओं, सिद्धसंघों, ऋषियों तथा मुनियों के द्वारा किये जा रहे राम की स्तुति के शब्दों की मधुर-ध्वनि सुनाई देने लगी॥ २१॥ उस समय बानरगण मनुष्य का रूप धारण कर हाथियों पर सवार होकर चले। इस प्रकार रघुश्रेष्ठ भगवान् राम शहनाई, शङ्ख, मृदङ्ग, तासे एवं नगाड़े आदि बाजों के घोष के

दूर्वादलश्यामतनुं महार्ह-
किरीटरत्नाभरणाञ्चिताङ्गम् ।
आरक्त-कञ्जायत-लोचनान्तं
दृष्ट्वा ययुर्मोदमतीव पुण्याः ॥२४॥
विचित्र-रत्नाञ्चित-सूत्रनद्ध-
पीताम्बरं पीनभुजान्तरालम् ।
अनर्घ्यमुक्ताफलदिव्यहारै-
र्विरोचमानं रघुनन्दनं प्रजाः ॥२५॥
सुग्रीवमुख्यैर्हरिभिः प्रशान्तै-
र्निषेव्यमाणं रवितुल्यभासम् ।
कस्तूरिकाचन्दनलिप्तगात्रं
निवीत-कल्पद्रुम-पुष्पमालम् ॥२६॥
श्रुत्वा स्त्रियो राममुपागतं मुदा
प्रहर्षवेगोत्कलिताननश्रियः ।
अपास्य सर्वं गृहकार्यमाहितं
हर्म्याणि चैवारुरुहुः स्वलङ्कृताः ॥२७॥

---

साथ भली प्रकार से सजायी हुई अयोध्यापुरी में चले। नगर में प्रवेश करते समय रामचन्द्रजी को आते हुए पुरवासी गण भी देखने लगे॥ २२-२३ ॥

वे पुण्यशील पुरजन एवं प्रजागण दूर्वादल के समान श्याम शरीर, बहुमूल्य मुकुट, अरुणवर्ण एवं कमल के समान विशाल नेत्रों वाले, विचित्र रत्नों से युक्त, सुनहले वर्ण के तार की कारीगरी से युक्त कामदार पीताम्बर धारण किये, विशाल वक्षस्थल वाले, बहुमूल्य मोतियों की माला से सुशोभित सुग्रीवादि शान्त स्वभाव के बानरों से सेवित, सूर्य के समान तेजस्वी, कस्तूरी एवं चन्दन का लेप धारण किये हुए, कल्प-वृक्ष के पुष्पों की माला पहने हुए श्रीरघुनाथजी को देख कर परम प्रसन्न हुए॥ २४-२६ ॥

राम को अयोध्यापुरी में आते हुए सुनकर स्त्रियों के मुख की कान्ति

